तप कर्मोग्रम्–इतरजन्तुभिर्दुरध्यवसेय, विशेषतो वर्द्धमानस्य सम्बन्धि तपो दुरध्यवसेय, वक्ष्यमाणन्यायेन सोपसर्गत्वादपानकत्वाद्बहुत्वाच्च, सातिरेकद्वादशवर्षमानछद्मस्थकाले हि तस्य वर्षमप्येकादशभिर्दिनैर्न्यून पारणककालो वक्ष्यते, शेष तु उपोषितस्तस्थौ, एतच्च सर्वमपानक सोपसर्ग चेति शेषतीर्थकृद्भ्यो दुरध्यवसेयतममिति गाथात्रयार्थ । इद च चिरन्तनानुयोगपटदर्शनाद्यनुसारतो मया व्याख्यात इति न स्वमनीषिका भाव्येति । अत्र कल्याणकै सार्द्ध क्वचिद्व्यभिचारोऽपि दृश्यते, स तु न प्रतन्यते, केवलिगम्यत्वात्तन्निर्णयस्येति । शिष्यसङ्ग्रहरूपे सङ्ग्रहद्वारे यतिमानप्रतिपादनायाह—'चुलसीति' गाहा, 'तिन्नि य' गाहा, छावट्ठी गाहा 'चोद्दस' गाथार्द्ध (प० १३९) व्याख्या—आदितीर्थकृत चतुरशीति सहस्राणि यतिशिष्यसङ्ग्रहप्रमाण १, एक लक्ष २ लक्षद्वय ३ त्रीणि लक्षाणि ४ विशतिसहस्राधिकानि त्रीणि लक्षाणीति ५ त्रिशत्सहस्राधिकानि त्रीणि लक्षाणि ६ त्रीणि लक्षाणि ७ सार्द्धलक्षद्वय ८ लक्षद्वय ९ एकं लक्षम् १० चतुरशीति सहस्राणि ११ द्विसप्तति सहस्राणि १२ अष्टषष्टि सहस्राणि १३ षट्षष्टि सहस्राणि १४ चतु षष्टि सहस्राणि १५ द्विषष्टि सहस्राणि १६ षष्टि सहस्राणि १७ पञ्चाशत्सहस्राणि १८ चत्वारिंशत्सहस्राणि १९ त्रिशत्सहस्राणि २० विशति सहस्राणि २१ अष्टादश सहस्राणि २२ षोडश सहस्राणि २३ चतुर्द्दश सहस्राणि २४ । एव चतुर्विंशतितीर्थकृता सर्वसङ्ख्यायामागत यतीनामष्टाविशतिर्लक्षाणि अष्टचत्वारिंशत्सहस्राणि, आह च—"अट्ठावीस लक्खा अडयालीस च तह सहस्साइ । सव्वेसिपि जिणाण जईण माण विणिद्दिट्ठ ॥ १ ॥" तदेतज्जिनानामृषभादिवर्द्धमानान्ताना यथाक्रम यतिशिष्यसङ्ग्रहप्रमाण विज्ञेयमिति सार्द्धगाथात्रयार्थ । साम्प्रत आर्यासङ्ग्रहप्रतिपिपादयिषया गाथादलेन प्रस्तावनामाह—आर्यासङ्ग्रहमानमृषभादीनामितोऽनन्तर

'तथाग्नावुत्पन्ने सञ्जात'मिति ( १२९-१०), कृष्युपकारिकुश्यादीनामग्निमन्तरेणाभावादिति भाव । सण सत्तदनो यस्य तत्सणसप्तदश धान्यमित्युक्त तच्चेद—"सालि १ जव २ वीहि ३ कोद्दव ४ रालय ५ तिल ६ मुग्ग ७ मास ८ वल्ल९ चणा १० । तुवरि ११ मसूर १२ कुलत्था १३ गोहुम १४ निप्फाव १५ अयसि १६ सणा १७ ॥ १ ॥" प्रथमवरवरिका समाप्ता ।

द्वितीयवरवरिकाया प्राय सुगमत्वाद्वृत्तिकृता बहवो गाथा न व्याख्याता अतस्ता यथा वैषम्य व्याख्यायन्ते—तत्र छद्मस्थकालोपलक्षित यत्तप कर्म्मद्वार तद्रूपो योऽवयवस्तद्व्याख्यावसरे 'वाससहस्स' गाहा 'तिदुण्णक्कग' गाहा 'तह-बारस'गाहा ( प० १३८ ) व्याख्या—प्रथमतीर्थकृत छद्मस्थकालो वर्षसहस्र १ तथा वक्ष्यमाणवर्षशब्दसम्बन्धाद् द्वादश वर्षाणि २ चतुर्दश वर्षाणि ३ अष्टादश वर्षाणि ४ विंशतिर्वर्षाणि ५ मासा षट् ६ अग्रेऽपि मासशब्दसम्बन्धात्नव मासा ७ त्रयो मासा ८ चत्वारो मासा ९ त्रयो मासा १० द्वौ मासौ ११ एको मास १२ द्वौ मासौ १३ । 'तिदुएक्कगसोल-सग'त्ति अनन्तरवक्ष्यमाणवर्षशब्दस्येह सम्बन्धात्त्रीणि वर्षाणि १४ द्वे वर्षे १५ एक वर्ष १६ षोडश वर्षाणि १७ त्रीणि वर्षाणि १८ अहोरात्रमेकम् १९ एकादश मासा २० नव मासा २१ चतु पञ्चाशद्दिनानि २२ चतुरशीतिर्दिनानि २३ तथेति समुच्चये द्वादश वर्षाणि २४, इह च महावीरस्य सातिरेकाणि द्वादश वर्षाणि छद्मस्थकाल "बारस चेव य वासा मासा छच्चेव अद्धमासो अ । वीरवरस्स भगवओ एसो छउमत्थपरियाओ ॥ १ ॥" इतीहैव वक्ष्यमाणत्वात् केवलमिहाल्प-त्वेन तदविवक्षेति लक्ष्यत । तदेवमिद जिनाना ऋषभादिमहावीरपर्यवसानाना यथाक्रम छद्मस्थकालपरिमाण विज्ञेय । एव च छद्मस्थकालमानमभिधाय तप कर्म्मस्वरूपप्रतिपादनायाह—'उग्ग चे'त्यादि ( १३८-१६ ), सर्वेषामपि तीर्थकृता

श्राविकापूर्वधरादिसङ्ख्या तु प्रथमानुयोगतो ज्ञेया, अनुयोगपटेष्वपि दृश्यते, पर मया न लिखिता, तेषामपि परस्पर विसंवादित्वादिति । 'कल्पात्तत्र कृतसमवसरणापेक्षये'ति(१४०–४), कल्पोऽवश्य तीर्थकृता प्रथमसमवसरण भवत्येव, अतो ज तूनामनवबोध पश्यताऽपि कल्पाद्–अवश्यकर्त्तव्याद्भगवता तत्र समवसरणमकारि, तदपेक्षया मध्यमासत्क द्वितीयमिति भाव । गणसङ्ख्याप्रतिपादनावसरे 'चुलसी'त्यादिगाथात्रयमेताश्च तिस्रोऽपि गाथा निगदसिद्धा अप्यङ्कतो विभज्यन्ते-चुलसीति १ पचणउती २ विउत्तर ३ सोलसुत्तर, षोडशोत्तर शतमिति गम्यते ४ सय च ५। सत्तहिअ ६ पणणउती ७ तिणउती ८ अट्ठसीती य ९ ॥ १ ॥ एक्कासीइ १० छावत्तरी अ (बावत्तरी वृ०)११ छावट्ठि १२ सत्तवन्ना य १३।पन्ना १४ तेयालीसा १५ छत्तीसा चेव १६ पणतीसा १७ ॥२॥ तित्तीस १८ अट्ठवीसा १९ अट्ठारस २० तहय चेव (चेव तहय वृ०) सत्तरस २१ । एक्कारस २२ दस२३ नवग२४ गणाण माण जिणिदाण॥३॥ गणाना–एकवाचनाचारक्रियास्थयतिसमुदायाना मानमुक्तरूप वृषभादिजिनेन्द्राणा यथाक्रम विज्ञेयमिति, न कुलसमुदाय इति, 'तत्थ कुल विन्नेय एगायरियस्स सतती जा य । दोण्ह मिहो पेगाण य साविक्खाण गणो भणिओ ॥ १ ॥' इति वचनाद्योऽयम यत्र कुलसमुदायरूपो गणोऽभिहित स इह न गृह्यते, किन्तूक्तस्वरूप एवेति भाव । तत्र श्रीमन्महावीरगणधरद्वयस्य यथाप्रवृत्त्यैव कथञ्चित्सूत्रविरचने एकैव वाचना, सामाचार्यप्येकेवाभूदिति गणधरद्वयेनापि गण एक एवाभूद्, एवमपरस्यापि गणधरद्वयस्यैवमेव वाच्यम्, एव च भगवतो महावीरस्यैकादशभिरपि गणधरैर्गणा नवैवाभूवन्निति, शेषतीर्थकृता तु यावन्तो गणधरा गणा अपि तावन्त एवेति, एतदेवाह—'एक्कारस उ गणहरा' गाहा (१४०–१४), उक्तार्थवेति । 'धर्म्मोपायस्य देशका' ( १४०–१५ ),

वक्ष्ये, तदेवाह—'तिन्नेव य' गाहा 'लक्ख' गाहा 'सट्ठी' गाहा ( १३९–७ ) व्याख्या—प्रथमतीर्थकृतस्त्रीणि लक्षाण्यार्यासङ्ग्रहोऽभूदिति १ त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि २ षट्त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि ३ त्रिंशत्सहस्राधिकानि षट् लक्षाणि ४ 'पंच य तीस'त्ति त्रिंशत्सहस्राधिकानि पञ्च लक्षाणि ५ विंशतिसहस्राधिकानि चत्वारि लक्षाणि ६ त्रिंशत्सहस्राधिकानि चत्वारि लक्षाणि ७ अशीतिसहस्राधिकानि त्रीणि लक्षाणि ८ 'तिण्हमित्तो य'त्ति त्रयाणां तीर्थकृतां नवमदशमैकादशलक्षणानामित ऊर्ध्वं यथाक्रमं वक्ष्ये इति गम्यते, तदेवाह—'वीसुत्तर छलहिय तिसहस्सहिय लक्खं च' ति, अनन्तरलक्षशब्दस्येहापि सम्बन्धाद्विंशतिसहस्राधिकं लक्षं ९ षड्भिरार्यिकाभिरधिकं लक्षं १० त्रिभिः सहस्रैरधिकं लक्षं ११ लक्खं चेति लक्षमेकम् १२ अष्टभिः शतैरधिकं लक्षं १३ द्विषष्टिः सहस्राणि १४ 'चउसयसमग्ग'त्ति अनन्तरातिक्रान्तानि द्विषष्टिसहस्राण्यत्रापि सम्बन्ध्यन्ते, ततश्चतुर्भिः शतैः समग्राणि द्विषष्टिः सहस्राणि १५ षट्शताधिकान्येकषष्टिः सहस्राणि १६ षट्शताधिकानि षष्टिः सहस्राणि १७ 'सट्ठि'त्ति षष्टिः सहस्राणि १८ 'पणपन्न'त्ति पञ्चपञ्चाशत्सहस्राणि १९ 'पन्न'त्ति पञ्चाशत्सहस्राणि २० 'एगचत्त'त्ति एकचत्वारिंशत्सहस्राणि २१ 'चत्त'त्ति चत्वारिंशत्सहस्राणि २२ अष्टत्रिंशत्सहस्राणि २३ षट्त्रिंशत्सहस्राणि २४। एष उक्तस्वरूपश्चतुर्विंशतेरपि तीर्थकृतां यथाक्रममार्यिकाणां सङ्ग्रहो विज्ञेयः। अत्र च सर्वतीर्थकरसाध्वीसङ्ख्यायामागतं चतुश्चत्वारिंशल्लक्षाणि षट्चत्वारिंशत्सहस्राणि चत्वारि शतानि षट् चार्यिकाः, तथा चाह—"चोयालीसं लक्खा छायालसहस्स चउसयसमग्गा। छच्चेव अज्जिआणं संगहो होइ एसो'त्ति ॥ १ ॥"। इति गाथाचतुष्टयार्थः। एषा च साधुसाध्वीनां स्वहस्तदीक्षितानां सङ्ख्या द्रष्टव्या, न गणधरादिदीक्षितानामिति गुरवः, श्रावक-

श्राविकापूर्वधरादिसङ्ख्या तु प्रथमानुयोगतो ज्ञेया, अनुयोगपटेष्वपि दृश्यते, पर मया न लिखिता, तेषामपि परस्पर विसवादित्वादिति । 'कल्पात्तत्र कृतसमवसरणापेक्षये'ति(१४०-४), कल्पोऽवश्य तीर्थकृता प्रथमसमवसरण भवत्येव, अतो जन्तूनामनवबोध पश्यताऽपि कल्पाद्–अवश्यकर्त्तव्याद्भगवता तत्र समवसरणमकारि, तदपेक्षया मध्यमासत्क द्वितीयमिति भाव । गणसङ्ख्याप्रतिपादनावसरे'चुलसी'त्यादिगाथात्रयमेताश्च तिस्रोऽपि गाथा निगदसिद्धा अप्यङ्कतो विभज्यन्ते-चुलसीति १ पचणउती २ बिउत्तर ३ सोलसुत्तर, षोडशोत्तर शतमिति गम्यते ४ सय च ५। सत्तहिअ ६ पणणउती ७ तिणउती ८ अट्ठमीती य ९ ॥ १ ॥ एक्कासीइ १० छावत्तरी अ (बावत्तरी वृ०)११ छावट्ठि १२ सत्तवन्ना य १३। पन्ना १४ तेयालीसा १५ छत्तीसा चेव १६ पणतीसा १७ ॥२॥ तित्तीस १८ अट्ठवीसा १९ अट्ठारस २० तहय चेव (चेव तहय वृ०) सत्तरस २१ । एक्कारस २२ दस२३ नवग२४ गणाण माण जिणिदाण॥३॥ गणाना–एकवाचनाचारक्रियास्थयतिसमुदायाना मानमुक्तरूप वृषभादिजिनेन्द्राणा यथाक्रम विज्ञेयमिति, न कुलसमुदाय इति, 'तत्थ कुल विन्नेय एगायरियस्स सततीजा य । दोण्ह मिहो णेगाण उ साविक्खाण गणो भणिओ ॥ १ ॥' इति वचनाद्योऽयम यत्र कुलसमुदायरूपो गणोऽभिहित स इह न गृह्यते, किन्तूक्तस्वरूप एवेति भाव । तत्र श्रीमन्महावीरगणधरद्वयस्य यथाप्रवृत्त्यैव कथञ्चित्सूत्रविरचने एकैव वाचना, सामाचार्यप्येकैवाभूदिति गणधरद्वयेनापि गण एक एवाभूद्, एवमपरस्यापि गणधरद्वयस्यैवमेव वाच्यम्, एव च भगवतो महावीरस्यैकादशभिरपि गणधरैर्गणा नवैवाभूवन्निति, शेषतीर्थकृता तु यावन्तो गणधरा गणा अपि तावन्त एवेति, एतदेवाह—'एक्कारस उ गणहरा' गाहा (१४०-१४), उक्तार्थवेति । 'धर्मोपायस्य देशका' ( १४०-१५ ),

भाचार्य , तथा द्रव्यतो नानाजीवान् क्षेत्रतो विदेहान् कालतो विदेहसम्बन्धिकाल भावतश्च क्षायोपशमिक भावमाश्रित्य श्रुतमनाद्यपर्यवसितमिति ज्ञेय, विशेषार्थिना तु विशेषावश्यकमनुसरणीयमिति। 'गाथाशेष'मित्यादि(२५–१८), गाथाशेष 'सत्तवि एए'इत्यादिक व्याख्यातमेवेति सम्बन्ध , किं कुर्वता ?–पूर्वमेवावधारणप्रयोग दर्शयतेति योग , शेष सुगम यावच्छ्रुतज्ञान समाप्तमिति । अवधिरधुना विव्रियते—'तथाऽवधिशब्दो द्विरावर्त्त्यत इति व्याख्यात'मिति ( २८–१३ ), एतदत्र हृदयम्—एकीयाचार्यमतेन तावदवधिशब्द पृथग्द्वारतया योजितो, द्वितीयमतेन तु वक्ष्यमाण-द्वारै सहैकत्वेन मीलयित्वाऽनन्तरमेव भणि यमाणविधिना व्याख्येय इत्येव द्विरावृत्ति , इद च द्विरावर्त्तन मया पूर्वमेव व्याख्यात, ननु पूर्वं न क्वचिद्व्याख्यातमेतत् ? इति चेत्सत्य, साक्षान्न व्याख्यातम् , 'अन्ये त्वाचार्या अवधिरित्येत-त्पद'मित्यादिना सामर्थ्याद्द्विरावृत्तिर्व्याख्यातैव, कथम् ?, अवधिर्वा नामादिभेदभिन्नो वक्तव्य अवधेर्वा क्षेत्रपरिमाणा दीनि द्वाराणि वक्तव्यानीति, प्रथममतमेवाश्रित्य तावदाह—'तथा क्षेत्रे'त्यादि ( २८–१४ ), नन्वाद्यमते तावदवधि-रित्येका प्रतिपत्ति , क्षेत्रपरिमाण तु द्वितीया, सस्थानमिति तृतीया, द्वितीयमते तु यदाऽवधिशब्दोऽर्थवशात्प्रथमान्तोऽपि षष्ठ्यन्तः शेषद्वारै सह सम्बध्यते तदा सस्थानमिति कतिथी प्रतिपत्तिर्भवति ? इत्याह—'अथवा अर्थाद्विभक्ती'त्यादि ( २८–१४ ), पातनिकैव व्याख्यात, केवल द्वितीयैवेय सस्थानलक्षणा प्रतिपत्तिरिति सामर्थ्याद्गम्यते, 'एमेया पडिवत्तिओ'-इति द्वितीयश्लोकान्तेऽभिधास्यमानत्वात्, कथ पुन सस्थान द्वितीया प्रतिपत्तिर्भवति ? इत्याह—'ततश्चावधेर्जघन्ये'

त्यादि ( २८–१५ ), अन्ये तु द्वितीयेवेय विभक्तिरित्यादिक किञ्चिद्व्याख्यानयन्ति तत्तु यदि पर त एव विदन्ति, सक- र्मकक्रियाया एव सूत्रेऽश्रवणादित्यल प्रसङ्गेनेति। 'चतुर्णां द्रव्यादीना वृद्धि'रित्यादि ( ३२–११ ), ननु काले वर्द्ध- माने पारिशेष्यात् त्रयाणामेव द्रव्यक्षेत्रभावाना वृद्धिर्भवतीत्येतावदेव वक्तुमुचित कथमुच्यते–काले वर्द्धमाने चतुर्णां वृद्धिर्भवति ?, इत्याशङ्क्याह—'सामान्याभिधानादि'ति, प्रथम वर्द्धमानतया विशेषत काल निर्द्धार्य ततो वृद्धिसाम्या चतुर्णामपि सामान्येनाभिधानादिति भाव, अस्ति चाय न्याय –एकस्मिन् रसनेन्द्रिये जिते पञ्चापि जितानि भवन्तीति, तथाऽन्धेन भोक्तुमाकारितेन जनद्वयमागच्छतीत्यादिवचनप्रवृत्तिदर्शनादिति। 'कालस्तु भक्तव्यो–विकल्पयितव्य'- इत्यादि (३२–१२), यदि हि क्षेत्रस्य प्रतिप्रदेशवृद्धौ काल समयवृद्ध्या वर्द्धते तदाऽङ्गुलासङ्ख्येयभागमात्रक्षेत्रवृद्धावपि काल तोऽसङ्ख्येया उत्सर्पिण्यवसर्प्पिण्यो वर्द्धेरन्, न चैतदिष्यते, अत क्षेत्रवृद्धावपि स्थूलत्वात्काल स्याद्वर्द्धते स्यान्नेति। 'ए होइ

१ पूर्वगाथातो वक्ष्ये इत्यस्यानुवृत्तेर्लाभात्, क्रियापद त्वत्रापि अध्याहार्यमेव, ततश्च विभक्तिपरिणामात् 'खित्तपरिमाणे सठाणे'इत्यादौ द्वितीया वाच्या, ततश्च क्षेत्रपरिमाण वक्तव्यमिति ब्रूञ्धातुना सम्बन्धयति, एवमेता प्रतिपत्तीर्वक्ष्ये इति पर्यन्ते तत्त्वत सम्बन्ध, सस्था नप्रतिपत्ते सख्यान त्वनुपयोग्येवेति स्याच मत। आदौ विषयसप्तम्या व्याख्यानेऽवधेर्मुख्यताऽभूत्, परिणामे तु तस्यैव क्षेत्रपरिमाणादेर्मु- ख्यतेति अवधेरित्यादिग्र थसगति, द्वितीया प्रतिपत्तिरिति तु अन्ये त्वाचार्या इत्यादिना लब्धमेव, द्विरावर्त्यते इत्यपि प्राग्व्याख्यात एव सिद्ध, यत प्रथम तावदवधिशब्दो नामादिभेदभिन्नेऽवधौ व्याख्यात द्वितीयोऽवधिशब्दश्चाग्रे योज्यते क्षेत्रपरिमाणविषयोऽवधिरित्यादौ ततो युक्ता

अपारते'इत्यादि ( ३२-१३ ) गाथाव्याख्या-द्वितीयाबहुवचनान्तेऽकारान्ते पदे पुल्लिङ्गेऽभिधेयेऽन्तस्यैकारो भवति, यथा—'नमिऊण जिणवरिंदे'इत्यादि, तथा तृतीयादिष्वादिशब्दाच्चतुर्थीपरिग्रहस्ततश्च 'एगम्मि'त्ति एकत्वे वर्त्तमानाना तृतीयाचतुर्थीषष्ठीसप्तमीना स्थाने महिलत्थेत्ति-स्त्रीलिङ्गेऽभिधेये एकारो भवति, तत्र तृतीयाया यथा—'सुदरबुद्धीए कय'-मित्यादि, चतुर्थ्या यथा-'गावीए पुण दिण्ण तणपि खीरत्तणमुवेइ'इत्यादि, षष्ठ्या स्थाने यथा-'तीए पुण विसुद्धीए कारण होंति पडिमाओ'इत्यादि,सप्तम्या स्थाने यथाऽत्रैव, ननु तृतीयादिष्वित्यत्रादिशब्दात् किमिति न पञ्चमीपरिग्रह ?, नैव, तत्स्थान ओकारस्य दर्शनात्, तद्यथा—'इत्थीओ आवि सकण'मित्यादि, अत एव चात्र 'तइयाइसु छट्ठीस त्तमीण' इति व्यस्तनिर्देश , अन्यथा ह्यादिशब्देन चतुर्थ्यादीना सर्वासामपि विभक्तीनामनुरोध स्यादेवेति गाथार्थ । ननु वस्तूना नवपुराणादय पर्याया कालक्रमेणैव भवन्त्यतस्ते चेदुत्तरोत्तरकालक्रमवृद्धिभाजो वर्त्तन्ते तदा तद्वृद्धौ सिद्धैव कालवृद्धिरत पर्यायवृद्धौ कालो भजनीय इति यदुक्त तदसङ्गतम् ? इत्याशङ्क्याह—'अक्कमवत्तिनामपि वृद्धिसम्भवा'-दित्यादि ( ३२-१८ ), इदमुक्त भवति—यद्युत्तरोत्तरकालक्रमवृद्धिभाजो नवपुराणादय एव वस्तूना पर्याया स्युस्तदा युज्येत भवद्वच , तच्च नास्ति, रूपरसगन्धस्पर्शतारतम्यादिपर्यायाणा मन्दक्षयोपशमावस्थानुपलब्धाना विशिष्टक्षयोप-शमे सति कालक्रमवृद्धरभावेऽपि बहूना युगपदेव वृद्धिसम्भवादिति भावनीयम् । 'पर पर सूक्ष्म ( तत्त्वा० अ० २ सू० ३८ ) मित्यादि ( ३५-३ ), औदारिकशरीराद्वैक्रिय सूक्ष्म स्वल्पाकाशप्रदेशावगाहीतियावत्, ततोऽप्याहारकतैजसका र्मणानि क्रमश सूक्ष्माणि, तदनेनापि किल तत्त्वार्थसूत्रेण क्षेत्रतो मद्व्याख्यात एव क्रम उक्तो भवति, अनेन हि किल

परम्परसूक्ष्मत्वप्रतिपादनेन कार्म्मणवर्गणा स्वल्पाकाशप्रदेशावगाहिन्यस्ततोऽपि तेजसादीना क्रमशो बहुप्रदेशावगाहिन्य इति सामर्थ्यादुक्त भवति, 'प्रदेशतोऽसङ्ख्येयगुण मित्यत्र ( त० अ० २ सू० ३९ ) प्राक्तैजसादिति विशेषो द्रष्टव्य, यावद्धि पुद्गलैरौदारिक निष्पद्यते ततोऽसङ्ख्येयगुणैर्वैक्रिय, ततोऽप्यसङ्ख्येयगुणैराहारक, तैजसकार्मणे तु क्रमशोऽनन्तगुणप्रदेशनिष्पन्ने 'अनन्तगुणे परे' इति ( त० अ० २ सू० ४० ) वचनादिति । 'भेदाभेदपरिणामाभ्या'मित्यादि ( ३५–१३ ), यावद्धि किल पुद्गलैस्तनुवर्गणास्कन्धा निष्पद्यन्ते तेभ्यो यदा केचित् पुद्गला विभिद्य पृथग् भवन्ति अन्ये त्वागन्तुका समागत्याभेदेन परिणमन्तीति आभ्या भेदाभेदपरिणामाभ्यामेतास्तनुवर्गणा औदारिकादियोग्यतादरपरिणामाभिमुखा भवन्तीत्यर्थ । 'अयमेव सर्वोत्कृष्टप्रदेश इत्यादि ( ३५–१८ ), अयमेवाचित्तमहास्कन्ध उत्कृष्टपुद्गलसङ्ख्यानिर्वृत्तो, नान्ये सन्तीति केचित्, एतच्चायुक्त, कथम् ? इत्याह—'यस्मादि'त्यादि, ननु चाचित्तमहास्कन्धा अपि कालभेदेन बहवो भवन्ति, तेषा च स्थित्यवगाहनादिभि परस्पर वैषम्याद् यदिद प्रज्ञापनाया स्थित्यवगाहनादिभिश्चतु स्थानपतितत्वादि वैषम्यमुक्त तदचित्तमहास्कन्धाश्रयेणाप्युपपत्स्यते तत्कुत एतद्व्यतिरेकेणापरोत्कृष्टप्रदेशकस्कन्धसत्ता ? इत्याशङ्क्याह—'अय पुनस्तुल्य एवे'ति ( ३५–२१ ), अयमित्येतज्जातावेकवचन, ततश्चायमर्थ —अमी पुनरचित्तस्कन्धा कालभेदेन बहवोऽपि जायमानास्तुल्या एवेति, एतदुक्त भवति—यद्यप्यचित्तमहास्कन्धा कालभेदेन बहवो भवन्ति तथाऽपि स्थितिरष्टसामयिकी अवगाहना च लोकव्याप्तिलक्षणैव सर्वेषामपि तुल्येनेति कथ तदाश्रयेण प्रज्ञापनोक्तस्थित्यादिवैषम्य युज्यते ?, किं च—असौ प्रज्ञापनायामुत्कृष्टप्रदेशिक स्कन्धोऽष्टस्पर्श पठ्यते, अय त्वचित्तमहास्कन्ध उत्कृ

ष्टप्रदेशिकोऽपि सन् सूक्ष्मपरिणामत्वाच्चतु स्पर्श एव,तस्मात्प्रज्ञापनोक्तस्थित्यादिवैषम्यभाजोऽष्टस्पर्शाश्चान्येऽप्युत्कृष्टप्रदेशिका स्कन्धा सन्तीति स्थितम् । गुरुलघ्वादिद्रव्यविचारे 'ओरालिय' गाहा, ( ३६–२ ), अत्र भावार्थ उच्यते–इह व्यवहारश्चतुर्द्धा द्रव्यमिच्छति, तद्यथा—अधोगमनस्वभाव गुरुक लेष्ट्वादिवद् ऊर्द्ध्वगतिस्वभाव लघुक प्रदीपशिखावत् तिरश्चीनगतिशील गुरुलघु वाय्वादिवत् निश्चलस्वभाव त्वगुरुलघु व्योमादिवत्, आह च—"गुरुअ लहुअ उभय नोभयमिति वावहारियनयस्स । दव्व लिट्ठू दीवो वाऊ वोम जहासखं ॥ १ ॥" निश्चयस्तु मन्यते–नायमेकान्तोऽधोगमनस्वभाव गुर्वेव भवतीति, लघुनाऽप्यधोगतिपरिणतेनाणुना व्यभिचारात्, नाप्यूर्द्ध्वगतिस्वभाव लघ्वेव, फलमुक्तोर्द्ध्वगतिपरिणतगुरुस्वभावैरण्डमिञ्जया व्यभिचारात्, तस्मादेकान्तगुर्वेकान्तलघु च द्रव्य नास्ति, किन्तु यद्बादरपरिणाम तद्गुरुलघु, यत्तु सूक्ष्म तदगुरुलघ्विति निश्चयस्य परिभाषेति, आह च—"निच्छयओ सव्वगुरु सव्वलहु वा न विज्जए दव्व । वायरमिह गुरुलहुअ अगुरुलहु सेसय दव्व ॥ १ ॥ तस्मादिह निश्चयनयमाश्रित्यौदारिकादीनि तैजसान्तानि बादरपरिणामत्वाद्गुरुलघुत्वेनोक्तानि, कार्मणद्रव्यादीनि तु सूक्ष्मपरिणामत्वादगुरुलघुत्वेनेति, एतन्मनस्याधायाह वृत्तिकृत्—'निश्चयनयापेक्षये'ति ( ३६–५ ) 'इहापि सामर्थ्यप्रापितत्वाद्द्रव्योपनिबन्धनस्ये'त्यादि(३६–१७), सङ्ख्येयलोकपल्योपमभागदर्शिनोऽपि हि किल तावत्कर्म्मद्रव्याणि विषयतयाऽभिहितान्यतोऽस्याधिकक्षेत्रकालदर्शिन सामर्थ्याद्द्रव्यमपि कर्म्मद्रव्याण्यतिक्रम्य किमप्यधिकमेव द्रष्टव्यमिति, 'काले चउण्ह वुड्ढी'इति पूर्वमेवोक्तत्वादिति भाव ,ननु च परमावधेर्द्रव्यत सर्वं रूपि द्रव्य क्षेत्रतोऽलोके लोकप्रमाणासङ्ख्येयाकाशखण्डप्रमाण क्षेत्र कालतोऽसङ्ख्येया उत्सर्प्पिण्यवसर्प्पिण्यो विषय उक्त , स चेह द्रव्याद्युपनिबन्धावसरे-

ऽनुक्तत्वात्कथमवसेय ? इत्याह—'अत एवे'त्यादि, अत एव च–सामर्थ्यादेव च तदुपर्यपि–कर्मद्रव्योपर्यपि ध्रुववर्गणादिक सर्वमपि परमाणुपर्यवसान द्रव्य पश्यत क्षेत्रकालवृद्धि क्रमेण ज्ञेया यावत्परमावधिविषय इति, कर्मद्रव्यातिक्रममात्रऽपि हि क्षेत्रतो लोकप्रमाणोऽवधिरुक्त यस्तु सर्वमपि ध्रुववर्गणादिद्रव्य पश्यति तस्यातिविशुद्धत्वात् सामर्थ्यादेव परमावधे सम्भवोऽनुमीयत इति भाव । 'स च पल्योपमासङ्ख्येयभागसमुदायमान'इति ( ३७–१ ), पल्योपमासङ्ख्येयभागरूपो य समुदाय स एव मान यस्य स तथा पल्योपमासङ्ख्येयभाग इतियावत्, न पुन समुदायशब्दमधिकमालोक्यार्था तर कल्पनीयमिति । 'सामान्य न्यायमङ्गीकृत्येत्थमेवे'त्यादि ( ४३–१५ ), इदमुक्त भवति–क्षेत्रस्यासख्येयप्रदेशात्मकत्वाद् यदि द्रव्यमपि तदवगाढत्वादसङ्ख्येयभागे परिकल्प्य क्षेत्रस्य प्राधान्यात्तदनुवृत्त्या वृद्धि नीयते तदा क्षेत्रवद्द्रव्यस्यापि चतुर्विधेव वृद्धि स्यात्, यदा तु क्षेत्रनिरपेक्षमेवावधिज्ञानविषयतया स्वतन्त्र द्रव्य चिन्त्यते तदा तस्य द्विविधैव वृद्धि, ननु तथाऽपि पर्यायवद्द्रव्यस्यापि षड्विधा वृद्धि कस्मान्न भवति आनन्त्यस्योभयत्रापि समानत्वात् ?, अत्रोच्यते, पर्याया णा ह्यपरक्षेत्रादिवृद्ध्यभावेऽप्यवस्थित एव क्षेत्रादावसङ्ख्येयभागादिवृद्धि सभाव्यते, द्रव्यस्य त्ववस्थितक्षेत्रेऽनन्तभागलक्षणैव वृद्धिर्लभ्यते, यदा त्वधिक विशुद्ध्यमानको भवति तदा क्षेत्रमपि वर्द्धते, तस्मिश्च वर्द्धमाने शेषवृद्धिस्थानान्युल्लङ्घ्यानन्तगुणैव द्रव्यवृद्धिर्भवतीत्येव तावत्सभाव्यते, तत्त्व तु केवलिनो विदन्तीति, 'पुद्गलानुवृत्त्या च तत्पर्याया'इति, अयमत्रार्थ –पुद्गलास्तिकायस्य विद्यत एवेद स्वरूप, यदुत द्रव्यस्यानन्तभागादिवृद्धौ पर्यायाणामपि तावत्येवासौ भवति, पर्यायानन्तस्य सर्वद्रव्येषु समानत्वात्, किन्तु यदाऽवधेर्विषयतया पर्यायाश्चिन्त्यन्ते तदाऽवध्यावरणक्षयोपशमापेक्षैव

तद्वृद्धिर्न द्रव्यवृद्ध्यपेक्षेति, अतो यस्य क्षेत्रादेर्यथैव चातुर्विध्यादिक्रमेण वृद्धिर्हानिर्वा प्रोक्ता तस्य तथैव युक्ता, कुत ? इत्याह—'प्रतिनियतविषयत्वादिति' ( ४३–१८ ), प्रतिनियतो ह्यवधिविषयतया चिन्त्यमानयो क्षेत्रादिवृद्धिहान्यो-विषय, तद्यथा—'वुड्ढी वा हाणी वा चउव्विहे'त्यादि, नन्वेतदप्यवधिविषयतया चिन्त्यमानयोर्वृद्धिहान्यो प्रतिनियत-विषयत्व कुत ? इत्याह—'विचित्रे'त्यादि, अवधेर्निबन्धन क्षयोपशम स च विचित्रोऽतस्तद्वशाज्जायमाने वृद्धिहानी उक्तक्रमेणैव भवत इत्यल प्रसङ्गेनेति । 'लोचनद्वयोपयोगवदि'त्यत्र ( ४३–२४ ) सप्तम्यन्ताद्वति, यथा किल लोचनद्व-यस्याप्युपयोग –व्यापारे सति जीवस्यैकदा एक एवोपयोग एवमनेकस्पर्द्धकव्यापारेऽप्येक एवास्योपयोग इति, यदिवा य प्रकाशमयस्तस्यैकस्मिन्नप्यर्थे प्रकाशकत्वेन व्याप्रियमाणस्य सर्वात्मना व्यापारो न देशत, यथा प्रदीपस्य, जीवोऽपि ज्ञानप्र-काशेन प्रकाशवान् ततोऽस्यापि सर्वस्पर्द्धककोपयोगतया सर्वात्मना व्यापार इति, एतदेवाह—'प्रकाशमये'त्यादि,उक्ता र्थमेव, नवर प्रदीपस्योपयोगो–व्यापार स इव–तद्वत्, प्रदीपस्य हि प्रकाशने व्याप्रियमाणस्य प्रत्यर्थ सर्वात्मना व्यापार न देशत, एव जीवस्यापीति भाव । क्षेत्रद्वारे 'सखेज्जमसखेज्जा' गाहा ( ४६–९ ), अत्राय तात्पर्यार्थ –यस्तावदसम्ब-द्धोऽवधिर्भवति स 'पुरुषावाधया हेतुभूतया' ( ४६–१३ ), अवधिपुरुषयोर्यदन्तराल तेन हेतुभूतेनासम्बद्धोऽवधिर्भ-वतीत्यर्थ, स चावधि सङ्ख्येयक्षेत्रविषयोऽसङ्ख्येयक्षेत्रविषयो वा भवति, यदिवा पुरुषावाधया 'स'इति सहार्थे तृतीया, कोऽर्थ ?–पुरुषावध्योरन्तराल सङ्ख्येयमसङ्ख्येय च भवति अवधिश्च सङ्ख्येयोऽसङ्ख्येयश्च भवतीति, एतदेवाह—'इदानीम-बाधया चिन्त्यत'इत्यादि ( ४६–१५ ), शेष सुगम यावज्ज्ञानपञ्चकसमाप्ति, नवर 'केवलनाणेणऽत्थे'इत्यादिगाथा

निवृण्वता पर्यन्ते यदुक्तं 'वाग्योगश्रुतं द्रव्यश्रुतमेव' ( ५०–१४ ) भवतीति तदनन्तरव्याख्यातपाठान्तरेण सह न योजनीयं, किन्तु प्रागेव, तत्र किल पूर्वं श्रुतशब्दं पृथक्कृत्येतदुक्तं 'स शब्दराशिः प्रोच्यमानस्तस्य भगवतो वाग्योग एव भवति', साम्प्रतं तु समस्तं श्रुतशब्दं कृत्वा निर्देशस्तद्वाग्योगश्रुतं शेषं भवति–द्रव्यश्रुतमेव भवतीत्यर्थः ॥

ज्ञानपञ्चकविवरणं समाप्तमिति ॥

'अपगतव्रतातिचारेतरोपचितकर्मविशरणार्थ'मिति । ( ५३–१६ ), अनन्तराभिहितपञ्चविधावश्यकानुष्ठानेनापगता ये व्रतानामतिचारास्तेभ्यो ये इतरे–सामायिकादिकायोत्सर्गान्तपञ्चविधावश्यकादशुद्धास्तैरुपचितं यत्कर्म तद्विशरणार्थमनशनादिगुणसन्धारणा प्रत्याख्यानस्याधिकारः, इदमुक्तं भवति–इह केचिदतिचारा मन्दसङ्क्लेशजनिताः कायोत्सर्गावसानावश्यकानुष्ठानतोऽपि निवर्त्तन्ते, अपरे त्वधिकतरसङ्क्लेशनिवर्त्यास्तपःशोध्या भवन्ति, तैर्यदुपचितं कर्म तन्निर्जरणार्थमनशनादिगुणप्रतिपत्तिरधिकारः षष्ठावश्यकस्येति । 'निवपुच्छिएण भणिओ'इत्यादि ( ५६–१२ ) गाथार्थः कथानकादवसेयः, तच्चेदम्—इह कस्यचिद्राज्ञः सूरेश्च जल्पोऽभूत्–एकेनोक्तं–राजपुत्रा विनीता भवन्ति, अपरेण तूक्तं–स्वयता, तत्र द्वयोरपि परीक्षणार्थं प्रथमं तावद्राजपुत्रो गङ्गा किमभिमुखी वहतीति निरीक्षणार्थं प्रेषितः, तेन चोक्तं–किमत्र निरीक्षणीयं ?, पूर्वाभिमुखी वहत्यसाविति प्रतीतमेवेदं, महता कष्टेन प्रेषितोऽप्यपान्तरालादागत्यावोचत्–गतोऽहं दृष्टा पूर्वाभिमुखी वहतीति । साधुः प्रेषितः, स चाचिन्तयत्–गुरवोऽपि पूर्वाभिमुखी वहत्यसाविति जानन्त्येव, केवलमिह कारणेन भाव्यमिति विचिन्त्य जानन्नपि तमर्थं गतो गङ्गायां, ज्ञात परतश्च विशेषतो निश्चित्य गुरवे न्यवेदयत्–पूर्वाभिमुखी

वहति, तत्त्व तु गुरवो विदन्तीति, द्वयोरपि च चेष्टा प्रच्छन्नपुरुषै राज्ञे निवेदिता, प्रतिपन्न चानेन–साधूनामनुत्तरो विनय इति, तदपरेणापि मुमुक्षुणा तत्साधुवदाचरणीयमिति। 'इद च निरुक्तिद्वारे सूत्रस्पर्शिकनिर्युक्तौ'चेत्यादि (५८–७) तत्र 'उद्देसे निद्देसे अ निग्गमे'इत्यादि यद्द्वारगाथाद्वय भणिष्यति तद्द्वितीयगाथान्ते 'भयागरिसफासणनिरुत्ती'-त्यनेनोपात्त निरुक्तिद्वार अध्यवसानपर्यन्तवर्त्तिन्या 'सामाइअ समइअ सम्मावाओ इत्यादिगाथया व्याख्यास्यते, अत्र तावन्निरुक्तिद्वारायात सामायिक व्याख्यात, तथा 'नदिमणुओगदार'इत्यादिना च भणिष्यमाणसूत्रस्पर्शिकनिर्युक्तो 'साम सम च सम्म इगमिति सामाइअस्स एगट्ठा'इत्यादिगाथाया च सामायिकव्याख्या करिष्यत इति भाव, शेष प्रकटार्थमिति। 'सुखावतार'मित्यादि (५९–१९), सुखावतार सुखोत्तार सरजस्कदर्शनमिति सटङ्क, कथ ?, तत्र कष्टानुष्ठाननियमस्य कस्यचिदभावाद्यथाकथचिद्रूपतयाऽपि व्रतपरिपालनस्य तैरभिधानात् सुखेनैव तद्दीक्षा प्राणिन प्रतिपद्यन्त इति सुखावतारता, तथा न तेषा दर्शने तथाविधवासकस्वभावा काचिन्निपुणा युक्तिरस्ति यद्वासितान्तरात्मा पुमॉस्तद्दीक्षा न परित्यजेत्, किञ्च—"शैवो द्वादश वर्षाणि, व्रत कृत्वा तत परम्। यद्यशक्तस्त्यजेतापि, याग कृत्वा व्रतेश्वरम् ॥ १ ॥" इति दीक्षात्यागस्य निर्दोषतयाऽप्यभिधानात्सुखोत्तरत्तेति १, सुखावतार दुरुत्तार शाक्यानां, तत्र 'मृद्वी शय्या प्रातरुत्थाय पेया, भक्त मध्ये पानक चापराह्णे। द्राक्षाखण्ड शर्करा चार्द्धरात्रे, मोक्षश्चान्ते शाक्यपुत्रेण दृष्ट ॥ १ ॥' इत्यभिधानात्, तथा 'मणुन्न भोअण भोच्चे'त्याद्यभिधानाच्च सुखावतारता, तथा वासकनिपुणयुक्तिसद्भावाद्व्रतत्यागे च महत ससारदण्डादे प्रतिपादनाद्दुरुत्तारतेति २, तृतीय बोटिकाना, तत्र नाग्न्यादिकष्टस्य दुरध्य-

वसेयत्वाद्दु खावतारता नान्यप्रतिष्ठापकतथाविधनिपुणयुक्त्यभावात् सुखोत्तारतेति ३, चतुर्थ साधूना, तत्र दु खावतारता वोटिकवद् दुरुत्तारता शाक्यवद्भावनीयेति ४। अन्ये तु सुखोत्तारता दुरुत्तारता वा सर्वत्र मोक्षमाश्रित्य व्याचक्षते, तत्र सरजस्काना स्वल्पेनैव किलेश्वरोक्तानुष्ठानेन मुक्तिप्राप्त्यभ्युपगमात्सुखोत्तार सुखेनास्मात्ससारजलधिमुत्तरन्तीति व्युत्पत्तेरिति, शाक्याना तु दुरवापविशिष्टध्यानमार्गाद् योगिज्ञानोत्पत्त्यादिक्रमेण मुक्त्यभ्युपगमाद्दुरुत्तारता दु खेनास्मात्ससारमुत्तरन्तीतिकृत्वा, वोटिकाना तु भिक्षाशुद्ध्यादीना गौणत्वेनाभ्युपगमान्नाग्न्यलक्षणनिर्ग्रन्थतामात्रादेव मुक्त्यभ्युपगमात्सुखोत्तारता, साधूना तु दुरुत्तारता शाक्यवद्भावनीयेति, अवतारपक्षे तु सर्वत्र भावना पूर्वोक्तैवेति। 'द्रव्यभावतीर्थ'मिति (५९-२०), तैरप्युक्तक्रमेण चतुष्प्रकार नद्यादेर्द्रव्यतीर्थमात्मात्मीय तु दर्शन भावतीर्थमिष्यते इति भाव ॥ 'ते वदिऊण सिरसा'इत्यादि गाथा विवृण्वता वृत्तिकृता–कि ?–निर्युक्ति कीर्त्तयिष्ये, इत्यस्मादनन्तर 'कस्से'ति (६१-१३) पष्ठ्यन्त यत्सद् निरदेशि तस्य पर्यन्तेऽभिधास्यमानेन श्रुतज्ञानस्येत्यनेन पदेन सह सम्बन्धो, न पुनरनन्तरनिर्दिष्टेन अर्थपृथक्त्वस्येत्यनेन सह, तस्य विशेषणत्वाच्छ्रुतज्ञानस्यैवात्र विशेष्यत्वात्, श्रुतज्ञानस्य निर्युक्ति कीर्त्तयिष्ये इत्यर्थ, भगवत इत्येतद्विशेषण किमित्याह—'स्वरूपाभिधानमेवे'ति तद्वता समग्रैश्वर्य्यादिगुणकलापोपेतत्वेन भगवत्त्वाच्छ्रुतमपि भगवदिति श्रुतज्ञानस्य स्वरूपमनेन विशेषणेनाभिधीयत इत्यर्थ । 'अल्लेसेहि वन्नेहि चित्तिउ'त्ति (६२-९), वज्रलेपादिकुद्रव्यप्रक्षेपरहितैर्वर्णकैश्चित्रित इत्यर्थ । 'एतेषा च मध्यभाग क्षपयन्नेता सप्तदश प्रकृती'रित्यादि (८४-११), इह कर्म्मग्रन्थेष्वन्तरे षोडशैव प्रकृतय क्षप्यमाणत्वेनाभ्युपगम्यन्ते न सप्तदश, यतस्तन्मतेनापर्याप्तनामकर्म्मेह न क्षप्यते, किन्त्वयोगी

द्विसप्ततिकर्मप्रकृतिकदम्बकमध्ये तत्क्षपयति, तस्मान्मतान्तरत्वेनेह सप्तदशानामुपन्यासो न विरुध्यत इति। 'समचउरसे नग्गोह मडले इत्यादिगाथानिक्षिप्तानामेव संस्थानानां स्वरूपव्याचिख्यासया प्राह—'तुल्लं वित्थडबहुलं गाहा (८५–९), तत्र नाभेरधस्तादूर्ध्वं च सर्वत्र शास्त्रोक्तसमस्तशरीरलक्षणाविसंवादित्वात्समचतुरस्रं तुल्यमुच्यते, तद्धि किलैवं व्युत्पाद्यते–समा –शरीरलक्षणोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रं, 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदादि'(पा–५–४–१२०) त्यकार समासान्त, अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिता शरीरावयवा, ततश्च सर्वेऽप्यवयवा शरीरलक्षणोक्तप्रमाणाविसंवादिनो यस्य न न्यूनाधिकप्रमाणा इति तत्तुल्यं भवत्येव १, तथा न्यग्रोधवत्परिमण्डलं, यथा न्यग्रोध उपरि सम्पूर्णावयवो भवति अधस्तु न तथा, तथेदमप्यत एवाह—'वित्थडबहुलं ति, नाभेरुपरि विस्तरबहुलं शरीरलक्षणोक्तप्रमाणभाक् अधस्तु हीनाधिकप्रमाणमिति भाव २, तृतीयं सादि कथम्भूतं भवतीत्याह—'उस्सेहबहु'ति, उत्सेधशब्देन नाभेरधस्तनदेहभागो गृह्यते, उत्सेधेन बहुपरिपूर्णं नाभेरधस्तनदेहभागे शरीरलक्षणोक्तप्रमाणभाग् भवतीत्यर्थ, अत एव तत्सादीत्यभिधीयते, सह आदिना–उत्सेधाख्यनाभेरधस्तनकायेन वर्त्तत इति सादि, सर्वमेव हि शरीरमभिहितस्वरूपेणादिना सह वर्त्तत एवेति विशेषणान्यथानुपपत्तेरादिरिह वैशिष्ट्योपेतो लभ्यते ३, वामनं तु मडभकोष्ठं, अत्र किल पाणिपादशिरोग्रीवं शरीरलक्षणोक्तप्रमाणयुक्तं भवति, शेषं तु हृदयोदरपृष्ठरूपं कोष्ठं हीनाधिकप्रमाणत्वान्मडभमिति–कृत्वा मडभकोष्ठमिदमुच्यते ४, कुब्जं त्वधस्तनकायमडभं, अधस्तनकायशब्देन चेह करचरणोरुग्रीवाशिर प्रभृतयोऽवयवा गृह्यन्ते, 'उस्सेहमहोकाओ करचरणाई य छिद्दिल्लो'इतिवचनात्, ते चात्र मडभाः–हीनाधिकप्रमाणोपेता यथोक्त–

ल्क्षणनिसवादिनो भवन्तीत्यधस्तनकायमडभमिदमुच्यते, कोष्ठस्यात्र विशिष्टप्रमाणलक्षणोपेतत्वादिति ५, 'हुण्ड तु सर्वत्रासस्थित' सर्वशरीरावयवाना प्रायस्तत्र यथोक्तप्रमाणलक्षणविसवादित्वादिति गाथार्थ । वचनानुयोग व्याख्यानयता यदुक्त 'पोडशाना चे'ति ( ८८-१२ ), तत्रायमर्थ —एकवचनादिस्वरूपाविर्भावक व्याख्यान वचनानुयोगोऽभिधीयते, पोडशवचनस्वरूपाविर्भावक वा, कानि पुनस्तानि पोडश वचनानीति चेत्, उच्यते, 'लिगतिय वयणतिय कालतिय तह परोक्खपच्चक्ख । उवणयवणयचउद्धा अज्झत्थ होइ सोलसम ।१। व्याख्या—इय स्त्री अय पुरुष इद कुलमिति त्रीणि लिङ्गप्रधानानि वचनानि-लिङ्गवचनानि, एको द्वौ बहव इत्येकत्वाद्यभिधायकशब्दसन्दर्भो वचनत्रिक, अकरोत्करोति करिष्यतीत्यतीतादिकालनिर्देशप्रधान वचन 'कालतिय ति कालत्रिकवचनमित्यर्थ, तथा स इति परोक्षनिर्देश परोक्षवचन, अयमिति प्रत्यक्षनिर्देश प्रत्यक्षवचन, उपनयापनयवचन तु चतुर्द्धा भवति, तद्यथा—रूपवती स्त्री सुशीला चेति उपनयोपनयवचन, रूपवती स्त्री पर कुशीलेत्युपनयापनयवचन, कुरूपा पर सुशीलेत्यपनयोपनयवचन, कुरूपा कुशीला चेत्यपनयापनयवचन, यत्रान्यच्चेतसि निधाय विप्रतारकबुद्ध्याऽन्यन्न वक्ति, किन्तु तद्यथा विवक्षित तत्तथैव मन शुद्ध्या ब्रवीति तत् पोडशमध्यात्मवचनमित्येतेषा पोडशाना वचनविशेषाणा स्वरूपाविर्भावक व्याख्यान वचनानुयोग इति गाथार्थ । 'पचहि ठाणेहिं सुय वाइज्जे त्यादि ( ८८-१५ ), यदाचार्य शिष्यान् श्रुत न ग्राहयति तदा त परित्यज्य श्रुतार्थिनस्तेऽन्यत्र गच्छेयुरिति कथ नु नाम मयैते शिष्या सङ्गृहीता भविष्यन्तीति बुद्ध्या श्रुत वाचयति, उपग्रहार्थ वा-तेषामेव

द्विसप्ततिकर्म्मप्रकृतिकदम्बकमध्ये तत्क्षपयति, तस्मान्मतान्तरत्वेनेह सप्तदशानामुपन्यासो न निरुध्यत इति। 'समचउरंसे नग्गोह मंडले'इत्यादिगाथानिर्दिष्टानामेव संस्थानानां स्वरूपव्याचिख्यासया प्राह—'तुल्लं वित्थडबहुलं'गाहा (८५-९), तत्र नाभेरधस्तादूर्द्ध्वं च सर्वत्र शास्त्रोक्तसमस्तशरीरलक्षणाविसंवादित्वात्समचतुरस्रं तुल्यमुच्यते, तद्धि किलैवं व्युत्पाद्यते—समा -शरीरलक्षणोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रं,'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदादि'(पा-५-४-१२०) त्यकार समासान्त, अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिता शरीरावयवा,ततश्च सर्वेऽप्यवयवा शरीरलक्षणोक्तप्रमाणाविसंवादिनो यस्य न न्यूनाधिकप्रमाणा इति तत्तुल्यं भवत्येव १, तथा न्यग्रोधवत्परिमण्डलं, यथा न्यग्रोध उपरि सम्पूर्णावयवो भवति अधस्तु न तथा, तथेदमप्यत एवाह—'वित्थडबहुलं ति, नाभेरुपरि विस्तरबहुलं शरीरलक्षणोक्तप्रमाणभाक् अधस्तु हीनाधिकप्रमाणमिति भाव २, तृतीयं सादि कथम्भूतं भवतीत्याह—'उस्सेहबहु ति, उत्सेधशब्देन नाभेरधस्तनदेहभागो गृह्यते, उत्सेधेन बहुपरिपूर्णं नाभेरधस्तनदेहभागे शरीरलक्षणोक्तप्रमाणभाग् भवतीत्यर्थ, अत एव तत्सादीत्यभिधीयते, सह आदिना-उत्सेधाख्यनाभेरधस्तनकायेन वर्त्तत इति सादि, सर्वमेव हि शरीरमभिहितस्वरूपेणादिना सह वर्त्तत एवेति विशेषणान्यथानुपपत्तेरादिरिह वैशिष्ट्योपेतो लभ्यते ३, वामनं तु मडभकोष्ठं, अत्र किल पाणिपादशिरोग्रीवं शरीरलक्षणोक्तप्रमाणयुक्तं भवति, शेषं तु हृदयोदरपृष्ठरूपं कोष्ठं हीनाधिकप्रमाणत्वान्मडभमितिकृत्वा मडभकोष्ठमिदमुच्यते ४, कुब्जं त्वधस्तनकायमडभं, अधस्तनकायशब्देन चेह करचरणोरुग्रीवाशिर प्रभृतयोऽवयवा गृह्यन्ते, 'उस्सेहमहोकाओ करचरणाई य हिट्ठिल्लो'इतिवचनात्, ते चात्र मडभा -हीनाधिकप्रमाणोपेता यथोक्त-

त्याददोषो, विशेपार्थिना तु भाष्यविवरणमन्वेपणीयमिति गाथार्थ ॥ 'अत्थाणत्थनिउत्ता' गाहा (९९–७), अस्थाने–अनौचित्येनार्थेषु–प्रयोजनेष्वर्थान्–सूत्रार्थरूपान्नियुक्ते अस्थानार्थनियोक्ता गुरुर्न भवतीति योगो, विधिना प्रतिपादिते वा अर्थे गुरुभिर्विपरीतार्थनियोक्ता शिष्यो न भवति, केव केषा[1]–विपरीतनियोक्त्री आभरणाना जीर्णश्रेष्ठिदुहितेवेति गाथार्थ । 'अयत्तणेण जीहाएँ' गाहा ( १०२–११ ), इह किल हसस्य जिह्वा अम्ला भवति, ततश्चासौ यदा दुग्धमिश्रोदकमध्ये चञ्चुपुट क्षिपति तदा तज्जिह्वाया अम्लत्वगुणेन दुग्धे वित्रुडिते 'कुइया होति'त्ति दुग्धवराटिका भवन्तीत्यर्थ, ततो हसो जल मुक्त्वा वराटिकाभि स्थित दुग्धमापिवति एव सुशिष्योऽपि दोपान्मुक्त्वा गुणान् गृह्णातीति गाथार्थ । 'एव

---

१ यद्यपि पूज्यैरेव स्वय विशेपावश्यक विवृण्वद्भिरेपा गाथाऽनुयोगविषयाणा द्रव्यादीना परस्परसमावेशार्थकतया पश्चाद् व्याख्याता अत्र चानुयोगसमावेशकतया, तथाऽपि न कथञ्चनापि हार्दमुद्भावित नीयते तत एवमुक्तौ न काश्चिद्धानि पश्याम यदुत द्रव्यस्य गुणपर्यायवत्त्वात् केवलस्य द्रव्यस्याभावात् यदा यदा द्रव्यानुयोग क्रियते तदाऽवश्य भावानुयोग कर्त्तव्यतामापनीपद्यते एव, तथा च द्रव्यानुयोगे क्रियमाणे नियमत एव भावानुयोगस्य कृति , तथा भावो न द्रव्याश्रयमन्तरा द्रव्य च न क्षेत्रमाधारमवस्थितिलक्षण च काल व्यतिरिच्येति द्रव्ये भावे च व्याख्यायमाने अवश्यमेव तद्व्याख्यासपूर्णतायै क्षेत्रकालव्याख्यानकृतिरिति न तौ क्षेत्रकालाभ्या विना व्याख्येयाविति न क्षेत्रकालाभ्या विना द्रव्यभावयोर्व्याख्यान, यदा च आधारभूतमाकाशरूप केवल क्षेत्र व्याख्यायते तदा आधेयतद्गुणादिस्थितिरूपाणा द्रव्यादीना व्याख्यान नातीवोपयुक्त न चाविनाभूतमिति भजना, तथा वर्त्तनारूपे काले स्वतन्त्रतया व्याख्यायमाने न द्रव्यभावक्षेत्रानुयोगानामुपयुक्ततेति 'काले भयणाए तीसुपि' द्रव्याद्यनुयोगविषयिण्या सचेतररूपभजनया कालानुयोग स्यादिति ।

शिष्याणामनुग्रहार्थमित्यर्थ स्वकर्म्मनिर्जरणार्थ च, तथा श्रुतपर्यवजातेन हेतुभूतेन वाचयेत् शिष्यान्, श्रुत वाचयत श्रुतपर्यवजात–श्रुतपर्यायराशिर्मम वृद्धि यास्यति, शिष्यान् वाचयतो ममापि श्रुत निर्मल भविष्यतीति कृतबुद्धिर्वा श्रुत वाचयेदित्यर्थ । 'दव्वे नियमा भावो' गाहा (८८–१९), व्यारया–'द्रव्ये' इति द्रव्यविषयेऽनुयोगे नियमाद्भावो–निश्चयेन भावानुयोगोऽस्ति, तदव्यारयाने द्रव्यस्य व्यारयातुमशक्यत्वादिति, 'न विणा ते यावि खेत्तकालेहिं' ति तावपि–द्रव्यभावानुयोगौ क्षेत्रकालानुयोगाभ्या विना न भवत, तद्विशिष्टत्वात्तयो, तथाहि—पर्यायाधार द्रव्य व्याख्यानयनत्र इयमव क्वचिदवगाढ व्याचष्टे स्थितिमच्चेति, तथा क्षेत्रानुयोगे क्रियमाणे त्रयाणामपि–द्रव्यकालभावानुयोगाना भजना–कदाचित्सन्ति कदाचिन्नेति, अलोकलक्षणे हि क्षेत्रे विचार्यमाणे तत्र परमाण्वादिद्रव्यस्याभावादाकाशद्रव्यस्य च क्षेत्रद्वारेणैव गृहीतत्वाद्द्रव्यानुयोगाभाव, समयादिरूपकालस्य च तत्राभावात्कालानुयोगाभाव, अगुरलघ्वादिक्षेत्रपर्यायाणामविरक्षितत्वात्क्षेत्रग्रहणेनैव च तेषा गृहीतत्वाद्भावानुयोगाभावोऽपि भावनीय इत्यलोकक्षेत्रे त्रयोऽप्यनुयोगा न विद्यन्ते, लोके तु समयक्षेत्रादौ सन्तीति भजना । तथा त्रिष्वपि–द्रव्यक्षेत्रभावेषु कालानुयोगो भजनीय, समयादिलक्षणो हि काल समयक्षेत्रान्तर्वर्त्तिद्रव्यादिष्वस्ति बहिर्वर्त्तिषु तु नास्तीति भजना, ननु यद्येव 'न विणा ते यावि खेत्तकालेहिं' इत्यत्र कालमन्तरेण द्रव्यभावौ न भवत इति यदुक्त तद्विरुध्यते, समयक्षेत्राद्बहिस्तमन्तरेणापि तयो सुलभत्वात्, सत्य, किन्तु पूर्वं वर्त्तनारूपस्यैव कालस्य विवक्षितत्वात्तस्य सर्वव्यापित्वाद्, अत्र तु समयक्षेत्रनियतसमयादिरूपस्यैव कालस्य विवक्षित-

विशेपतो वर्द्धमानस्य सम्वन्धि तपो दुरध्यवसेय, वक्ष्यमाणन्यायेन सोपसर्ग-
तप कर्माग्रम्-इतरजन्तुभिर्दुरध्यवसेय, विशेपतो वर्द्धमानस्य सम्वन्धि तपो दुरध्यवसेय, वक्ष्यमाणन्यायेन सोपसर्ग-
त्वादपानकत्वाद्बहुत्वाच्च, सातिरेकद्वादशवर्पमानछद्मस्थकाले हि तस्य वर्पमप्येकादशभिर्दिनैर्न्यून पारणककालो वक्ष्यते, शेप
तु उपोपितस्तस्थौ, एतच्च सर्वमपानक सोपसर्ग चेति शेपतीर्थकृद्भ्यो दुरध्यवसेयतममिति गाथात्रयार्थ । इद च चिरन्त-
नानुयोगपददर्शनाद्यनुसारतो मया व्याख्यात इति न स्वमनीपिका भाव्येति । अत्र कल्याणके सार्द्ध क्वचिद्व्यभिचारोऽपि
दृश्यते, स तु न प्रतन्यते, केवलिगम्यत्वात्तन्निर्णयस्येति । शिष्यसङ्ग्रहरूपे सङ्ग्रहद्वारे यतिमानप्रतिपादनायाह—'चुलसीति'
गाहा, 'तिन्नि य' गाहा, छावठ्ठी गाहा 'चोद्दस' गाथार्द्ध (प० १३९) व्याख्या—आदितीर्थकृत चतुरशीति सहस्राणि यतिशिष्य
सङ्ग्रहप्रमाण १, एक लक्ष २ लक्षद्वय ३ त्रीणि लक्षाणि ४ विशतिसहस्राधिकानि त्रीणि लक्षाणीति ५ त्रिशत्सहस्राधिकानि
त्रीणि लक्षाणि ६ त्रीणि लक्षाणि ७ सार्द्धलक्षद्वय ८ लक्षद्वय ९ एकं लक्षम् १० चतुरशीति सहस्राणि ११ द्विसप्तति
सहस्राणि १२ अष्टपष्टि सहस्राणि १३ पट्पष्टि सहस्राणि १४ चतु पष्टि सहस्राणि १५ द्विपष्टि सहस्राणि १६ पष्टि
सहस्राणि १७ पञ्चाशत्सहस्राणि १८ चत्वारिशत्सहस्राणि १९ त्रिशत्सहस्राणि २० विशति सहस्राणि २१ अष्टादश सह
स्राणि २२ पोडश सहस्राणि २३ चतुर्दश सहस्राणि २४ । एव चतुर्विंशतितीर्थकृता सर्वसङ्ख्यायामागत यतीनामष्टाविंश-
तिर्लक्षाणि अष्टचत्वारिशत्सहस्राणि, आह च—"अट्ठावीस लक्खा अडयालीस च तह सहस्साइ । सव्वेसिपि जिणाण जईण
माण विणिद्दिट्ठ ॥ १ ॥" तदेतज्जिनानामृपभादिवर्द्धमानान्ताना यथाक्रम यतिशिष्यसङ्ग्रहप्रमाण विज्ञेयमिति सार्द्धगाथा-
त्रयार्थ । साम्प्रत आर्यासङ्ग्रहप्रतिपिपादयिपया गाथादलेन प्रस्तावनामाह—आर्यासङ्ग्रहमानमृपभादीनामितोऽनन्तर

'तत्राग्नावुत्पन्ने मज्ञात'मिति ( १२९–१०), कृष्युपकारिकुश्यादीनामग्निमन्तरेणाभावादिति भाव । मथ सप्तदशो यस्य तत्सणसप्तदश धान्यमित्युक्त तच्चेद—"सालि १ जव २ वीहि ३ कोद्दव ४ राल्य ५ तिल ६ मुग्ग ७ मास ८ चउ९चणा १० । तुवरि ११ मसूर १२ कुलत्था १३ गोहुम १४ निप्फाव १५ अयसि १६ सणा १७ ॥ १ ॥" प्रथमवरवरिका समाप्ता ।

द्वितीयवरवरिकाया प्राय सुगमत्वाद्वृत्तिकृता वह्वयो गाथा न व्याख्याता अतस्ता यथा वैषम्य व्याख्यायन्ते—तत्र छद्मस्थकालोपलक्षित यत्तप कर्म्मद्वार तद्रूपो योऽव्ययवस्तद्व्याख्यावसरे 'वाससहस्स' गाहा 'तिदुण्णग' गाहा 'तह बारस'गाहा ( प० १३८ ) व्याख्या—प्रथमतीर्थकृत छद्मस्थकालो वर्षसहस्र १ तथा वक्ष्यमाणवर्षशब्दसम्बन्धाद् द्वादश वर्षाणि २ चतुर्दश वर्षाणि ३ अष्टादश वर्षाणि ४ विंशतिर्वर्षाणि ५ मासा षट् ६ अग्रेऽपि मासशब्दसम्बन्धान्नव मासा ७ त्रयो मासा ८ चत्वारो मासा ९ त्रयो मासा १० द्वौ मासौ ११ एको मास १२ द्वौ मासौ १३ । 'तिदुण्णगसोलस'गे'ति अनन्तरवक्ष्यमाणवर्षशब्दस्येह सम्बन्धात्त्रीणि वर्षाणि १४ द्वे वर्षे १५ एक वर्षं १६ षोडश वर्षाणि १७ त्रीणि वर्षाणि १८ अहोरात्रमेकम् १९ एकादश मासा २० नव मासा २१ चतु पञ्चाशद्दिनानि २२ चतुरशीतिर्दिनानि २३ तथेति समुच्चये द्वादश वर्षाणि २४, इह च महावीरस्य सातिरेकाणि द्वादश वर्षाणि छद्मस्थकाल "बारस चेव य वासा मासा छच्चेव अद्धमासो अ । वीरवरस्स भगवओ एसो छउमत्थपरियाओ ॥ १ ॥" इतीहैव वक्ष्यमाणत्वात् केवलमिहाल्पत्वेन तदविवक्षेति लक्ष्यते । तदेवमिद जिनाना ऋषभादिमहावीरपर्यवसानाना यथाक्रम छद्मस्थकालपरिमाण विज्ञेय । एव च छद्मस्थकालमानमभिधाय तप कर्म्मस्वरूपप्रतिपादनायाह—'उग्ग चे'त्यादि ( १३८–१६ ), सर्वेषामपि तीर्थकृता

श्राविकापूर्वधरादिसङ्ख्या तु प्रथमानुयोगतो ज्ञेया, अनुयोगपटेष्वपि दृश्यते, पर मया न लिखिता, तेषामपि परस्पर विसवादित्वादिति । 'कल्पात्तत्र कृतसमवसरणापेक्षये'ति(१४०–४), कल्पोऽवश्य तीर्थकृता प्रथमसमवसरण भवत्येव, अतो जन्तूनामनवबोध पश्यताऽपि कल्पाद्–अवश्यकर्त्तव्याद्भगवता तत्र समवसरणमकारि, तदपेक्षया मध्यमासत्क द्वितीयमिति भाव । गणसङ्ख्याप्रतिपादनावसरे 'चुलसी'त्यादिगाथात्रयमेताश्च तिस्रोऽपि गाथा निगदसिद्धा अप्यङ्कतो विभज्यन्ते-चुलसीति १ पचणउती २ विउत्तर ३ सोलसुत्तर, षोडशोत्तर शतमिति गम्यते ४ सय च ५। सत्तहिअ ६ पणणउती ७ तिणउती ८ अट्ठसीती य ९ ॥ १ ॥ एकासीइ १० छावत्तरी अ (बावत्तरी वृ०)११ छावट्ठि १२ सत्तवन्ना य १३।पन्ना १४ तेयालीसा १५ छत्तीसा चेव १६ पणतीसा १७ ॥२॥ तित्तीस १८ अट्ठवीसा १९ अट्ठारस २० तहय चेव (चेव तहय वृ०) सत्तरस २१ । एक्कारस २२ दस२३ नवग२४ गणाण माण जिणिदाण॥३॥ गणाना–एकवाचनाचारक्रियास्थयतिसमुदायाना मानमुक्तरूप वृषभादिजिनेन्द्राणा यथाक्रम विज्ञेयमिति, न कुलसमुदाय इति, 'तत्थ कुल विन्नेय एगायरियस्स सतती जा य । दोण्ह मिहो णेगाण व साविक्खाण गणो भणिओ ॥ १ ॥' इति वचनाद्योऽयमन्यत्र कुलसमुदायरूपो गणोऽभिहित स इह न गृह्यते, किन्तूक्तस्वरूप एवेति भाव । तत्र श्रीमन्महावीरगणधरद्वयस्य यथाप्रवृत्त्यैव कथञ्चित्सूत्रविरचने एकैव वाचना, सामाचार्य्यप्येकैवाभूदिति गणधरद्वयेनापि गण एक एवाभूद्, एवमपरस्यापि गणधरद्वयस्यैवमेव वाच्यम्, एव च भगवतो महावीरस्यैकादशभिरपि गणधरैर्गणा नवैवाभूवन्निति, शेषतीर्थकृता तु यावन्तो गणधरा गणा अपि तावन्त एवेति, एतदेवाह—'एक्कारस उ गणहरा' गाहा (१४०–१४), उक्तार्थवेति । 'धर्म्मोपायस्य देशका' ( १४०–१५ ),

वक्ष्ये, तदेवाह—'तिन्नेव य' गाहा 'लक्ख' गाहा 'सट्ठी' गाहा ( १३९-७ ) व्याख्या—प्रथमतीर्थकृतस्त्रीणि लक्षाण्या-
र्यासङ्ग्रहोऽभूदिति १ त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि २ षट्त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि ३ त्रिंशत्सहस्राधि
कानि षट् लक्षाणि ४ 'पच य तीस'त्ति त्रिंशत्सहस्राधिकानि पञ्च लक्षाणि ५ विंशतिसहस्राधिकानि चत्वारि लक्षाणि
६ त्रिंशत्सहस्राधिकानि चत्वारि लक्षाणि ७ अशीतिसहस्राधिकानि त्रीणि लक्षाणि ८ 'तिपरमित्तो य'त्ति त्रयाणां तीर्थ
कृतां नवमदशमैकादशलक्षणानामित ऊर्द्धं यथाक्रमं वक्ष्ये इति गम्यते, तदेवाह—'वीसुत्तर छलहिय तिसहस्सहिय
लक्खं च'त्ति, अनन्तरलक्षशब्दस्येहापि सम्बन्धाद्विंशतिसहस्राधिकं लक्षं ९ षड्भिरार्यिकाभिरधिकं लक्षं १० त्रिभिः सहस्रैरधिकं
लक्षं ११ लक्खं चेति लक्षमेकम् १२ अष्टभिः शतैरधिकं लक्षं १३ द्विषष्टिः सहस्राणि १४ 'चउसयसमग्ग'त्ति अनन्तरातिक्रान्तानि
द्विषष्टिसहस्राण्यत्रापि सम्बध्यन्ते, ततश्चतुर्भिः शतैः समग्राणि द्विषष्टिः सहस्राणि १५ षट्शताधिकान्येकषष्टिः सहस्राणि
१६ षट्शताधिकानि षष्टिः सहस्राणि १७ 'सट्ठि'त्ति षष्टिः सहस्राणि १८ 'पणपन्न'त्ति पञ्चपञ्चाशत्सहस्राणि १९ 'पन्न'त्ति
पञ्चाशत्सहस्राणि २० 'एगचत्त'त्ति एकचत्वारिंशत्सहस्राणि २१ 'चत्त'त्ति चत्वारिंशत्सहस्राणि २२ अष्टत्रिंशत्सहस्राणि
२३ षट्त्रिंशत्सहस्राणि २४। एष उक्तस्वरूपश्चतुर्विंशतेरपि तीर्थकृतां यथाक्रममार्यिकाणां सङ्ग्रहो विज्ञेयः। अत्र च सर्व-
तीर्थकरसाध्वीसङ्ख्यायामागतं चतुश्चत्वारिंशल्लक्षाणि षट्चत्वारिंशत्सहस्राणि चत्वारि शतानि षट् चार्यिकाः, तथा चाह—
"चोयालीसं लक्खा छायालसहस्स चउसयसमग्गा। छच्चेव अज्जिआणं संगहो होइ एसोत्ति ॥ १ ॥"। इति गाथा-
चतुष्टयार्थः। एषा च साधुसाध्वीनां स्वहस्तदीक्षितानां सङ्ख्या द्रष्टव्या, न गणधरादिदीक्षितानामिति गुरवः, श्रावक-

नाधर्म्मापायतया प्रेर्यन्ते ?, अथ विवेकिना महासत्त्वाना शुभाध्यवसायहेतुत्वेन धर्म्मोपायभूतान्येवामूनि, यद्येवमुक्तविशे-
पणविशिष्टाना दयापरिणतिजनकत्वेन जीवनिकायेष्वपि समानमिद पश्याम इत्यल प्रसङ्गेनेति गाथार्थ ॥ साम्प्रत पर्या-
यद्वार प्रकृत, तत्र कस्य तीर्थकरस्य कियान् दीक्षाकाल इति प्रतिपादयन्नाह—'उसभस्स पुव्वलक्ख' गाहा 'पणवीस'
गाहा 'चउप्पन्न' गाहा 'तेवीस च' गाहा 'अद्धट्ठमा' ( १४० ), व्याख्या—इह पूर्वाङ्ग चतुरशीतिवर्पलक्षप्रमाण पूर्वाङ्गे-
णैव गुण्यते तत एक पूर्व भवति, तच्चेद—७०५६००००००००००, तदुक्त—"पुव्वस्स य परिमाण सयरि खलु होंति
कोडिलक्खाओ । छप्पन्न च सहस्सा बोद्धव्वा वासकोडीण ॥ १ ॥" तत्राद्यतीर्थकृत ऋपभस्वामिन उक्तस्वरूपाणा पूर्वा-
णामेक लक्ष दीक्षाकालो विज्ञेय १, तदेव पूर्वलक्ष पूर्वाङ्गेन—चतुरशीतिवर्पलक्षप्रमाणेन न्यूनमजितस्य द्वितीयतीर्थकृतो
दीक्षाकाल २ इत ऊर्ध्व चतुर्भि पूर्वाङ्गै पुन २ न्यून पूर्वलक्ष तावन्नेय यावत्सुविधिर्नवमस्तीर्थकर, तद्यथा—चतुर्भि
पूर्वाङ्गैर्न्यून पूर्वलक्ष ३ अष्टभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ४ द्वादशभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ५ पोडशभि पूर्वाङ्गैर्न्यून पूर्वलक्ष
६ विंशतिभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ७ चतुर्विंशतिभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ८ अष्टाविंशतिभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ९ एव
सुविधि यावदतिदेशेनाभिधाय शीतलप्रभृतीना प्रत्येकमभिधित्सुराह—शीतलस्य पुन पञ्चविंशति पूर्वसहस्राणि पर्याय
१० श्रेयासस्यैकविंशतिर्वर्पलक्षाणि ११ चतु पञ्चाशद्वर्पलक्षाणि १२ पञ्चदशवर्पलक्षाणि १३ तत सार्द्धसप्तवर्पलक्षाणि १४
तत सार्द्धवर्पलक्षद्वय १५ पञ्चविंशतिर्वर्पसहस्राणि १६ त्रयोविंशतिर्वर्पसहस्राणि सार्द्धसप्तशताधिकानि भवन्ति १७ एक-
विंशतिर्वर्पसहस्राणि १८ वर्पशतन्यूनानि पञ्चपञ्चाशत् वर्पसहस्राणि १९ सार्द्धसप्त वर्पसहस्राणि २० सार्द्ध वर्पसहस्रद्वय

इत्येतस्मिन् द्वारे धर्म्मे –क्षान्त्यादिको दशप्रकार , स चेह शैलेश्यावस्थाप्राप्तस्य सम्बन्धी प्रकर्षप्राप्तो गृह्यते, तस्य चोपायो–येनासौ प्राप्यते स वक्तव्य , तस्य चोपायस्य देशका वक्तव्या , एतदुभयमप्याह—'धम्मोवातो पवयण' गाहा ( १४०–१७ ), व्याख्या–धर्म्मस्योपाय , क इत्याह—'प्रवचन' द्वादशाङ्गीस्वरूप चरमाङ्गान्तर्वर्त्तीनि वा पूर्वाणि उक्तस्वरूपधर्म्मस्य प्राप्त्युपाय , एतदुक्तानुष्ठानादेव तदवाप्तेरिति । धर्म्मोपायमुपदर्श्य तस्य देशकानाह—देशकास्तस्य–धर्म्मोपायस्य, के इत्याह—सर्वे जिनानामृषभादीना गणधरा –ऋषभसेनेन्द्रभूत्यादयो, ये च यस्य तीर्थकृतश्चतुर्दशपूर्वविदो यावन्तस्ते धर्मोपायस्य देशका नान्ये, तेषामेव यथोक्तधर्म्मस्वरूपवेत्तृत्वादिति गाथार्थ । प्रकारान्तरेण धर्म्मोपायमुपदर्शयन्नाह–'सामाइयाइया वा' गाहा ( १४०–१८ ), व्याख्या—सामायिकमादिर्यासा ता सामायिकादय , सामायिकपूर्विका इत्यर्थ , व्रतानि–प्राणातिपातविरमणादीनि जीवनिकाया –पृथिव्यादय भावना —'इरिआसमिए सयाजए'इत्यादिग्रन्थप्रतिपादिता पञ्चव्रतसम्बन्धिन्य पञ्चविंशति अनित्यत्वादिविषया वा द्वादश, एषा द्वन्द्वे व्रतजीवनिकायभावना , सामायिकाङ्गीकारपूर्विका सत्यो व्रतजीवनिकायभावना इत्येष धर्म्मोपायो जिनै सर्वनिर्दिष्ट इति सण्टङ्क । कदा निर्दिष्ट इत्याह—'प्रथम'मिति आद्यसमवसरणप्रवर्त्तनावसर एवेत्यर्थ । यद्वा प्रथममोघतस्तावदाद्यदीक्षाप्रतिपत्तिसमये एष धर्म्मोपाय , उत्तरकाले तु जिनकल्पपरिहारविशुद्धिकभिक्षुप्रतिमाऽभिग्रहादिभेदभिन्नोऽनेकविधो द्रष्टव्य इति भाव , ननु सामायिकादीना धर्म्मोपायत्वमस्तु, जीवनिकायाना तु कथ ?, केषाञ्चित् क्लिष्टसत्त्वाना वधपरिणतिहेतुत्वेन प्रत्युताधर्म्मोपायत्वात्तेषामिति, हन्त यद्येव सामायिकादीन्यपि केषाञ्चित् क्षुद्रसत्त्वानामसदध्यवसायजनकत्वेन किं

नाधर्म्मापायतया प्रेर्यन्ते ?, अथ विवेकिना महासत्त्वाना शुभाध्यवसायहेतुत्वेन धर्म्मोपायभूतान्येवामूनि, यद्येवमुक्तविशेषणविशिष्टाना दयापरिणतिजनकत्वेन जीवनिकायेष्वपि समानमिद पश्याम इत्यल प्रसङ्गेनेति गाथार्थ ॥ साम्प्रत पर्यायद्वार प्रकृत, तत्र कस्य तीर्थकरस्य कियान् दीक्षाकाल इति प्रतिपादयन्नाह—'उसभस्स पुव्वलक्ख' गाहा 'पणवीस' गाहा 'चउप्पन्न' गाहा 'तेवीस च' गाहा 'अद्धट्ठमा' ( १४० ), व्याख्या—इह पूर्वाङ्ग चतुरशीतिवर्षलक्षप्रमाण पूर्वाङ्गेणैव गुण्यते तत एक पूर्व भवति, तच्चेद–७०५६०००००००००, तदुक्त—"पुव्वस्स य परिमाण सयरि खलु होंति कोडिलक्खाओ । छप्पन्न च सहस्सा बोद्धव्वा वासकोडीण ॥ १ ॥" तत्राद्यतीर्थकृत ऋषभस्वामिन उक्तस्वरूपाणा पूर्वाणामेक लक्ष दीक्षाकालो विज्ञेय १, तदेव पूर्वलक्ष पूर्वाङ्गेन–चतुरशीतिवर्षलक्षप्रमाणेन न्यूनमजितस्य द्वितीयतीर्थकृतो दीक्षाकाल २ इत ऊर्ध्व चतुर्भि पूर्वाङ्गै पुन २ न्यून पूर्वलक्ष तावन्नेय यावत्सुविधिर्नवमस्तीर्थकर, तद्यथा—चतुर्भि पूर्वाङ्गैर्न्यून पूर्वलक्ष ३ अष्टभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ४ द्वादशभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ५ षोडशभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ६ विंशतिभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ७ चतुर्विंशतिभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ८ अष्टाविंशतिभि पूर्वाङ्गैर्न्यून पूर्वलक्ष ९ एव सुविधि यावदतिदेशेनाभिधाय शीतलप्रभृतीना प्रत्येकमभिधित्सुराह—शीतलस्य पुन पञ्चविंशति पूर्वसहस्राणि पर्याय १० श्रेयासस्यैकविंशतिर्वर्षलक्षाणि ११ चतु पञ्चाशद्वर्षलक्षाणि १२ पञ्चदशवर्षलक्षाणि १३ तत सार्द्धसप्तवर्षलक्षाणि १४ तत सार्द्धवर्षलक्षद्वय १५ पञ्चविंशतिर्वर्षसहस्राणि १६ त्रयोविंशतिर्वर्षसहस्राणि सार्द्धसप्तशताधिकानि भवन्ति १७ एकविंशतिर्वर्षसहस्राणि १८ वर्षशतन्यूनानि पञ्चपञ्चाशत् वर्षसहस्राणि १९ सार्द्धसप्त वर्षसहस्राणि २० सार्द्ध वर्षसहस्रद्वय

२१ सप्तवर्षशतानि २२ सप्ततिर्वर्षाणि २३ द्विचत्वारिंशद्वर्षाणि २४ । एष दीक्षाकालो जिनेन्द्राणामृषभादीना यथाक्रम विज्ञेय इति गाथापञ्चकार्थ ॥ एव दीक्षापर्याय प्रतिपाद्य साम्प्रत पर्यायसाम्यादेव कुमारवासादिपर्याय दर्शयन्नाह— 'उसभस्स कुमारत्त'मित्यादि ( प० १४१ ), गाथात्रयोविंशतिरेता पाठसिद्धा एव, नवरमाद्यासु नवसु गाथासु ऋषभादीना सुविधिपर्यन्ताना नवाना तीर्थकृता कुमारत्वपर्यायो राज्यपर्यायश्चेत्येतदेव द्वय द्वय उक्त न दीक्षापर्यायस्तस्यानन्तरमेवोक्तत्वात् पुनरपि च 'उसभस्स पुव्वलक्ख'मित्यादिना वक्ष्यमाणत्वाच्चेति । वासुपूज्यमल्ल्यरिष्टनेमिपार्श्ववर्द्धमानलक्षणाना तु तीर्थकृता कुमारत्वपर्यायो व्रतपर्यायश्चेत्येतदेव द्वयं चतसृभि गाथाभिरुक्त, न राज्यपर्याय, अनङ्गीकृतराज्यत्वेन प्रतिपादितत्वात्तेषा तदसभवादिति, शान्तिकुन्थ्वरलक्षणस्य तु तीर्थकरत्रयस्य तिसृभिर्गाथाभि कुमारमाण्डलिकचक्रवर्त्तिदीक्षापर्यायलक्षण चतुष्टय २ उक्त, चक्रवर्त्तित्वात्तेषा, तत्र माण्डलिकोऽनवाप्तचक्ररत्नादिचक्रवर्त्तिलक्ष्मीक सामान्यो राजा उच्यते, शेषाणा तु सप्ताना तीर्थकृता सप्तभिर्गाथाभि कुमारराज्यदीक्षापर्यायलक्षण त्रय २ प्रतिपादित, अङ्गीकृतराज्यत्वात्तेषामचक्रवर्त्तित्वाच्चेति । अपर चेह—'अद्धाइज्जा लक्खा कुमारवासो ससिप्पहे होई । अद्ध छच्चिय रज्जे'त्ति क्वचिदेव पाठ, क्वचित्तु 'अद्धुट्ठावि अ लक्खा कुमारवासो ससिप्पहे होई । अद्धच्छट्ठायरज्जे'त्येव, क्वचित्तु 'अड्ढाइज्जा लक्खा कुमारवासो ससिप्पहे होई । अद्धच्छट्ठ य रज्जे'त्येव दृश्यते २, इति पाठत्रय, तत्र चरमपाठोऽशुद्ध एव, सर्वायुष्केण सह विसवादित्वात्, तथाहि—'चउरासीतिबिसत्तरी त्यादिगाथायामनन्तरमेवास्य दश पूर्वलक्षाण्यायु प्रतिपादयिष्यते, अस्मिंस्तु पाठे दीक्षापर्यायसत्के चतुर्विंशतिभि पूर्वाङ्गैर्न्यूने पूर्वलक्षे क्षिप्तेऽपि नवैव पूर्वलक्षाण्यागच्छ

न्तीति, अन्यत्र तु पाठद्वये दीक्षापर्यायसङ्ख्याक्षेपे दशपूर्वलक्षाण्यागच्छन्त्येव, केवलमाद्यपाठ एव सङ्गतिमानिति वृद्धवाद, तत्त्व तु केवलिनो विदन्तीति । एवमन्यत्रापि यत्र विसवादवुद्धिरुत्पद्यते तत्र कुमारवासादिपर्यायसङ्ख्या मीलयित्वा सर्वायुष्केण सह सवादो मृग्य इति त्रयोविंशतिगाथातात्पर्यार्थं ॥ ननु ऋषभादीना सुविधिपर्यन्ताना नवाना तीर्थकृता किमिति कुमारराज्यपर्यायलक्षण द्वयमेवोक्त, न तु दीक्षापर्याय इति ?, पूर्वोक्तत्वात्पुनर्भणने पौनरुक्त्यप्रसङ्गादिति चेत्तर्हि शीतलप्रभृतीनामपि पूर्वमसावुक्त एव किमिति पुनरप्युक्त इत्याशङ्क्याद्याना नवाना तीर्थकृता दीक्षापर्यायप्रतिपादनायाह— 'उसभस्स पुव्वलक्ख' गाहा ( १४१ ), प्राक्प्रत्येक दीक्षाप्रतिपादनावसरे व्याख्यातेवेयमिति । नन्वनया गाथया नवानामभिहितो दीक्षापर्याय, शेषाणा तु कथमित्याह—'सेसाण परिया' गाहा ( १४१ ), व्याख्या—शेषाणा शीतलप्रभृतीना दीक्षापर्याय कुमारवासादिपर्यायेण सहेवोक्त इति नेहोच्यत इति भाव । नन्विदमेव प्रथम भवद्भिर्दीक्षापर्याय उच्यते उत प्रागप्युक्तोऽसावित्याह—'पत्तेअपि य पुव्व'ति प्रत्येक कुमारवासादिपर्यायैर्वियुतोऽपिशब्दस्य व्यवहितसम्बन्धत्वात्पूर्वमपि भणितोऽसाविति शेष । यद्येव-स्थानद्वयेऽस्य भणन किमर्थमित्याह—तथाविधस्मृतिपाटववियुक्तशिष्यजनानुग्रहार्थमिति गाथार्थ ॥ ननूक्तस्तीर्थकृता कुमारवासादिपर्याय केवलिपर्यायस्तु नाद्याप्युक्त स कथमवसेय इत्याह— 'छउमत्थकाल' गाहा ( प० १४२ ), व्याख्या—भावप्रधानत्वान्निर्देशस्य छद्मस्थत्वस्य छद्मस्थत्वे वा कालश्छद्मस्थकाल छद्मस्थाना वा काल छद्मस्थकालस्त, किमित्याह—'एत्तो सोहेउ'ति एतस्मात्स्थानद्वयोक्तदीक्षाकालाच्छोधयित्वा शेषकस्तूद्धरितो जिनकालो विज्ञेय इति गम्यते, यद्यपि चेह क्षीणोपशान्तमोहच्छद्मस्थोऽपि जिन उच्यते तथाऽप्यत्र जिनशब्देन

२१ सप्तवर्षशतानि २२ सप्ततिर्वर्षाणि २३ द्विचत्वारिंशद्वर्षाणि २४ । एष दीक्षाकालो जिनेन्द्राणामृषभादीनां यथाक्रमं विज्ञेय इति गाथापञ्चकार्थः ॥ एवं दीक्षापर्यायं प्रतिपाद्य साम्प्रतं पर्यायसाम्यादेव कुमारवासादिपर्यायं दर्शयन्नाह—'उसभस्स कुमारत्त'मित्यादि ( पृ० १४१ ), गाथात्रयोविंशतिरेता पाठसिद्धा एव, नवरमाद्यासु नवसु गाथासु ऋषभादीनां सुविधिपर्यन्तानां नवानां तीर्थकृतां कुमारत्वपर्यायो राज्यपर्यायश्चेत्येतदेव द्वयं द्वयं उक्तं न दीक्षापर्यायस्तस्यानन्तरमेवोक्तत्वात् पुनरपि च 'उसभस्स पुव्वलक्ख'मित्यादिना वक्ष्यमाणत्वाच्चेति । वासुपूज्यमल्ल्यरिष्टनेमिपार्श्ववर्द्धमानलक्षणानां तु तीर्थकृतां कुमारत्वपर्यायो व्रतपर्यायश्चेत्येतदेव द्वयं चतसृभिः गाथाभिरुक्तं, न राज्यपर्यायः, अनङ्गीकृतराज्यत्वेन प्रतिपादितत्वात्तेषां तदसंभवादिति, शान्तिकुन्थ्वरलक्षणस्य तु तीर्थकरत्रयस्य तिसृभिर्गाथाभिः कुमारमाण्डलिकचक्रवर्त्तिदीक्षापर्यायलक्षणं चतुष्टयं २ उक्तं, चक्रवर्त्तित्वात्तेषां, तत्र माण्डलिकोऽनवाप्तचक्ररत्नादिचक्रवर्त्तिलक्ष्मीकः सामान्यो राजा उच्यते, शेषाणां तु सप्तानां तीर्थकृतां सप्तभिर्गाथाभिः कुमारराज्यदीक्षापर्यायलक्षणं त्रयं २ प्रतिपादितं, अङ्गीकृतराज्यत्वात्तेषामचक्रवर्त्तित्वाच्चेति । अपरं चेह—'अड्ढाइज्जा लक्खा कुमारवासो ससिप्पहे होई। अद्धं छट्ठिय रज्जे'त्ति क्वचिदयं पाठः, क्वचित्तु 'अड्डुट्ठावि य लक्खा कुमारवासो ससिप्पहे होई । अद्धच्छट्ठापरज्जे'त्येव, क्वचित्तु 'अड्ढाइज्जा लक्खा कुमारवासो ससिप्पहे होई । अद्धच्छट्ठ य रज्जे'त्येव दृश्यते २, इति पाठत्रयं, तत्र चरमपाठोऽशुद्ध एव, सर्वायुष्केण सह विसंवादित्वात्, तथाहि—'चउरासीतिविसत्तरी'त्यादिगाथायामनन्तरमेवास्य दश पूर्वलक्षाण्यायुः प्रतिपादयिष्यते, अस्मिंस्तु पाठे दीक्षापर्यायसत्के चतुर्विंशतिभिः पूर्वाङ्गैर्न्यूने पूर्वलक्षे क्षिप्तेऽपि नवैव पूर्वलक्षाण्यागच्छ

सर्वायुष्क प्रतिपाद्य क्रमप्राप्तमन्तक्रियाद्वारमाह–'निवाण'गाहा (१४२), व्याख्या—अन्तक्रिया किमुच्यते इत्याह–निर्वाण मो
क्षगमनमितियावत्,सा चान्तक्रिया चतुर्दशभक्तेन षड्भिरुपवासैरित्यर्थ ,प्रथमनाथस्य–ऋषभदेवस्याभूत्, शेषाणा त्वजितादीना
मासोपवासेन, किं सर्वेषामित्याह–वीरजिनेन्द्रस्य षष्ठेन, द्वाभ्यामुपवासाभ्यामिति गाथार्थ । केषु पुन स्थानेषु तेषामन्त
क्रियाऽभूदित्याह–'अट्ठावय' गाहा (१४२), अष्टापदादिषु स्थानेषु ऋषभादय सिद्धि गता इति यथासङ्ख्य सम्बन्ध , तद्यथा–
अष्टापदपर्वते ऋषभ सिद्धिमुपाययौ, चम्पाया वासुपूज्य , उज्जयन्ते नगे नेमि , अपापानगर्यां महावीर , शेषास्तु उक्त
व्यतिरिक्ता विंशति सम्मतशैलशिखरे सिद्धि गता इति गाथार्थ । तत्र च क कियत्परिवार सिद्ध इत्याह—'एक्को'
गाहा 'पचहिं' गाहा 'सत्त' गाहा 'दसहिं' गाहा (१४२), एताश्चतस्रोऽपि पाठसिद्धा एव, नवर 'अट्ठसएण धम्मो त्ति
अष्टोत्तरशतेन साधूना परिवृतो धर्म्म सिद्ध इत्यर्थ , 'पउमाभे तिन्नि अट्ठसय'त्ति पद्मप्रभतीर्थकृद्विषये त्रीण्यष्टोत्तरश-
तानि साधूना निर्वृतानीत्यवगन्तव्य, त्रिगुणमष्टोत्तरशतमित्यर्थ , त्रीणि शतानि चतुर्विंशत्यधिकानीतियावत्, ननूक्त
तीर्थकृतामन्तक्रियावसरे भक्तपरित्यागस्थानपरिवारस्वरूपम्,एतत्तु नोक्त कस्तीर्थकर कस्या वेलाया सिद्धिवधूसङ्गमुपलेभे,
को वा किमवस्थ सिद्ध इत्यादि, तदेतदाशङ्क्याह—अन्तक्रियासम्बन्धकालादिस्वरूप यन्मयेह नोक्त तत्प्रथमानुयोगाद्-
द्वादशाङ्गान्तर्गताच्छास्त्रविशेषाद्विज्ञेयमिति गाथाचतुष्टयगूढपदार्थ ॥ साम्प्रत सर्वतीर्थकरवक्तव्यताया बहुत्वमालोक्य तद्व-
र्णने च प्रकृतग्रन्थगौरव निश्चित्य ग्रन्थान्तरेऽतिदेश दित्सुरुपसहरन्नाह—'इच्चेवमाई सव्व' गाहा (१४२) व्याख्या—
'इति' उपप्रदर्शने, एवशब्द प्रकारार्थे, ततश्च 'सबोहणपरिच्चाए' इत्यादिग्रन्थसदर्भेण यन्मया तीर्थकृता सम्बोधनपरि-

केवली विवक्षितो, जिनत्वस्य जिनाना वा कालो जिनकाल, केवलिकाल इत्यर्थ, इदमुक्त भवति—'वाससहस्स वारसे'त्यादिना यश्छद्मस्थकाल उक्त स दीक्षाकालाद् 'उसभस्स पुव्वलक्ख'मित्यादिना अभिहिताच्छोध्यते, तत शेष केवलिकालो भवति, तद्यथा—ऋषभदेवस्य वर्षसहस्रलक्षण छद्मस्थकालो यदा पूर्वलक्षस्वरूपाद् दीक्षाकालादुद्ध्रियते तदा वर्षसहस्रन्यून पूर्वलक्ष केवलिकालो भवति, एवमन्यत्रापि भावनीयमिति । तदेव सर्वतीर्थकृता समस्तानपि कुमारवासादिपर्यायान् भेदतोऽभिधाय साम्प्रत सर्वेषा सामान्येन सर्वायुष्कप्रतिपिपादयिषया उपक्रमते—'सव्वाउय'मित्यादि, सर्वायुष्कमपि ऋषभादीनामत ऊर्ध्व मम कथयतो निशामयत यूयमिति गाथार्थ । यथाप्रतिज्ञातमेवाह—'चउरासीइ' गाहा (पृ० १४२), व्याख्या—इह गाथापर्यन्ते पूर्वाणामित्युक्त गाथाप्रथमार्द्धपर्यन्ते च लक्षाणीत्युक्त, ततश्चेत्थ सम्बन्धो द्रष्टव्य—पूर्वाणा लक्षाणि चतुरशीति प्रथमतीर्थकरस्य सर्वायुष्कमिति १ द्विसप्तति पूर्वलक्षाणि २ षष्टि पूर्वलक्षाणि ३ पञ्चाशत्पूर्वलक्षाणि ४ चत्वारिंशत्पूर्वलक्षाणि ५ त्रिंशत्पूर्वलक्षाणि ६ विंशति पूर्वलक्षाणि ७ दश पूर्वलक्षाणि ८ द्वे पूर्वलक्षे ९ एक पूर्वलक्ष १० । 'चउरासीइ' गाहा (पृ० १४२), व्याख्या—इहापि गाथापर्यन्ते शतसहस्राणीत्युक्त, प्रथमार्द्धपर्यन्ते तु वर्षाणामिति, ततश्चतुरशीतिर्वर्षाणा शतसहस्राणि लक्षाणीतियावत् एकादशस्य सर्वायुष्कमिति इत्य ११ द्विसप्ततिर्वर्षलक्षाणि १२ षष्टिर्वर्षलक्षाणि १३ त्रिंशद्वर्षलक्षाणि १४ दश वर्षलक्षाणि १५ एक वर्षलक्ष १६ 'पञ्चाणउइ' गाहा (पृ० १४२), पञ्चनवति सहस्राणि वर्षाणामितीहापि सम्बध्यते १७ चतुरशीतिर्वर्षसहस्राणीति गम्यते १८ पञ्चपञ्चाशद्वर्षसहस्राणि १९ त्रिंशद्वर्षसहस्राणि २० दश वर्षसहस्राणि २१ एक वर्षसहस्र २२ शत वर्षाणा २३ द्विसप्ततिर्वर्षाणि २४ इति गाथात्रयार्थ ।

त्थानकथनमन्तरेणाविकला कथिता स्यादिति मरीच्युत्थान वक्तव्य,तदपि न ऋषभसमुत्थानकथनमन्तरेण सम्यक्कथयितु शक्यमिति ऋषभजिनसमुत्थानस्य प्रकृतता, तच्च किञ्चिदुक्त किञ्चित्तु 'चित्तबहुलट्ठमीए'(१४२) इत्यादिनाऽनन्तरमेव वक्ष्यत इति गाथार्थ ॥ 'चतुर्मुष्टिक च लोच कृत्वे'ति (१४२-२१),पञ्चममुष्टियोग्यान् किल केशान् भगवत कनकावदाते शरीरेऽञ्जनरेखा इव राजमानानुपलभ्य शक्रेण प्रणिपत्य विज्ञप्त-भगवन्! मय्यनुग्रह विधाय ध्रियन्तामित्थमेवामी, भगवताऽपि तदुपरोधात्तथैव कृतमिति, अत एवेदानीमपि स्कन्धोपरि वल्लरिका क्रियन्त इति भाव । 'सेज्जसो से सयपभा देवी पुव्वभवनिन्नामिय-' त्ति ( १४६-४ ), स श्रेयासजीवो ललिताङ्गदेवस्य स्वयप्रभादेवी आसीत् , साऽपि पूर्वभवे किमासीदित्याह—'निर्नामिके'ति, अथ केय निर्नामिकेति?, तदुत्पत्ति सक्षेपादुच्यते-धातकीखण्डद्वीपे पूर्वविदेहे मङ्गलावतीविजये नन्दिग्रामे अतीव दारिद्र्यविद्रुतनाइलाभिधानगृहपतेर्नागश्रीनाम्न्यास्तद्भार्याया षण्णा दुहितॄणामुपरि सप्तमी पुत्रिका समभूद् दुहितृद्विजितैश्च मातापितृभिर्न तस्या नाम चक्रे, ततो लोके निर्नामिकेति ख्याति गता, अन्यदा च कस्मिश्चिदुत्सवे समृद्धजनडिम्भरूपाणि नानाविधखाद्यपेयादिवस्तुव्यग्रहस्तान्युद्यानादिषु गच्छन्ति दृष्ट्वा निर्नामिकाऽपि मोदकादिवस्तूनि मातर याचितवती, मात्राऽप्यतीवानिष्टत्वादुक्ताऽसौ, गच्छाम्बरतिलक पर्वत तत पात कृत्वा म्रियस्व वा फलानि वा भक्षय, इतस्तावदपसर, ततोऽसावतीव दु खिता रुदती गृहान्निर्गत्याम्बरतिलक पर्वत ययौ, तत्र च पूर्वसमवसृतयुगन्धराचार्यसमीपे धर्म्ममाकर्ण्य प्रतिपद्य श्रावकधर्म्म गत्वा नन्दिग्राम कृत्वा विविध तप कर्म दौर्भाग्यादिदोषात् केनचिदपरिणीतैव परिणतवया स्वीकृ-

त्यागादिकमुक्तमित्येवप्रकारमादौ कृत्वाऽपरमपि पूर्वभववक्तव्यतादिक सविस्तर सर्व जिनाना सम्बन्धि प्रथमानुयोगाद्–उक्त-
स्वरूपाद्विज्ञेयमिति । ननु यद्येव सर्वमपि प्रथमानुयोगादेव ज्ञास्यते त्वया किञ्चिदपि किमित्युक्तमित्याशङ्क्याह—स्थाना-
शून्यार्थं पुनर्भणित किञ्चिदिति गम्यत इति न दोष । इत किमित्याह—'पगय अओ वुच्छ'ति (१४२), प्रकृत–प्रस्तु
त वस्तु अतोऽनन्तर वक्ष्येऽभिधास्य इति गाथार्थ । ननु प्रकृत वक्ष्ये इत्युक्त, किञ्च तदिह प्रकृतमिति नाद्यापि सम्य-
ग्निश्चिनुम इत्याह—'उसभजिण' गाहा (१४२), व्याख्या—कथमसौ सम्यक्त्वमवाप कदा वा तीर्थकरनामकर्मबन्ध कुतो
वाऽऽगत्य इहोत्पन्न कदा वा दीक्षा जग्राह इत्यादिलक्षण ऋषभजिनसमुत्थानमत्र प्रकृत तद्वक्ष्ये इति पूर्वगाथावयवेन सटङ्क ,
ननु कथमत्र ऋषभजिनसमुत्थान प्रकृतमित्याह—'उट्ठाण ज तओ मरीइस्स त्ति(१४२),यद्–यस्मात्कारणात् ऋषभजिनादु-
त्थानम्–उत्पत्तिर्मरीचे , इदमुक्त भवति–मरीचेरिहोत्पत्तिरानेतव्या, नचासौ ऋषभदेवसमुत्थानेऽवर्णितेऽभिहितापि सम्यग
वधार्यत इति ऋषभजिनसमुत्थानमिह प्रकृत, ननु स्यादेव यदि मरीचेरप्युत्पत्त्या किञ्चिदिह प्रयोजन स्यात् तच्च नास्ति,
असम्बद्धत्वात्तस्या इत्याह—'सामाइयस्स एसो' इत्यादि(१४२), 'यद्' यस्मात्कारणादेष सर्वोऽपि पूर्व षड्विधनिर्गमस्वरूपप्र-
तिपादनादारभ्य सामायिकस्य कुत पुरुषद्रव्यादिह निर्गत सोऽपि च पुरुष कथ मिथ्यात्वादिभ्यो निर्गत इत्येवंरूपो निर्गमोऽ-
धिकृत , तेन मरीच्युत्पत्ति प्रयोजनवती, यदि नाम सामायिकस्य निर्गमोऽधिकृतस्तर्हि मरीच्युत्पत्ते किमायात?, सत्यम्,
एतदुक्त भवति–सामायिकाध्ययन ह्येतत् , ततस्तस्य द्रव्यनिर्गमे विचार्ये कुतो द्रव्यादिह निर्गतमिति जिज्ञासिते महा
वीरद्रव्यादिति वक्तव्य, महावीरोऽपि कथ मिथ्यात्वादिभ्यो निर्गत इति बुभुत्सिते महावीरोत्पत्तिर्वक्तव्या,न चासौ मरीच्यु-

त्थानकथनमन्तरेणाविकला कथिता स्यादिति मरीच्युत्थान वक्तव्य,तदपि न ऋषभसमुत्थानकथनमन्तरेण सम्यक्कथयितु शक्यमिति ऋषभजिनसमुत्थानस्य प्रकृतता, तच्च किञ्चिदुक्त किञ्चित्तु 'चित्तबहुलट्ठमीए'(१४२) इत्यादिनाऽनन्तरमेव वक्ष्यत इति गाथार्थ ॥ 'चतुर्मुष्टिक च लोच कृत्वे'ति (१४२-२१), पञ्चममुष्टियोग्यान् किल केशान् भगवत कनकावदाते शरीरेऽञ्जनरेखा इव राजमानानुपलभ्य शक्रेण प्रणिपत्य विज्ञप्त–भगवन्! मय्यनुग्रह विधाय ध्रियन्तामित्थमेवामी, भगवताऽपि तदुपरोधात्तथैव कृतमिति, अत एवेदानीमपि स्कन्धोपरि वल्लरिका क्रियन्त इति भाव । 'सेज्जसो से सयपभा देवी पुव्वभवनिन्नामिय'त्ति ( १४६-४ ), स श्रेयासजीवो ललिताङ्गदेवस्य स्वयप्रभादेवी आसीत्, साऽपि पूर्वभवे किमासीदित्याह—'निर्नामिके'ति, अथ केय निर्नामिकेति ?, तदुत्पत्ति सक्षेपादुच्यते–धातकीखण्डद्वीपे पूर्वविदेहे मङ्गलावतीविजये नन्दिग्रामे अतीव दारिद्र्यविद्रुतनाइलाभिधानगृहपतेर्नागश्रीनाम्यास्तद्भार्याया षण्णा दुहितृणामुपरि सप्तमी पुत्रिका समभूद् दुहितृद्विजितैश्च मातापितृभिर्न तस्या नाम चक्रे, ततो लोके निर्नामिकेति ख्याति गता, अन्यदा च कस्मिंश्चिदुत्सवे समृद्धजनडिम्भरूपाणि नानाविधखाद्यपेयादिवस्तुव्यग्रहस्तान्युद्यानादिषु गच्छन्ति दृष्ट्वा निर्नामिकाऽपि मोदकादिवस्तूनि मातर याचितवती, मात्राऽप्यतीवानिष्टत्वादुक्ताऽसौ, गच्छाम्बरतिलक पर्वत तत पात कृत्वा म्रियस्व वा फलानि वा भक्षय, इतस्तावदपसर, ततोऽसावतीव दु खिता रुदती गृहान्निर्गत्याम्बरतिलक पर्वत ययौ, तत्र च पूर्वसमवसृतयुगन्धराचार्यसमीपे धर्म्ममाकर्ण्य प्रतिपद्य श्रावकधर्म्म गत्वा नन्दिग्राम कृत्वा विविध तप कर्म दौर्भाग्यादिदोषात् केनचिदपरिणीतैव परिणतवया स्वीकृ-

त्यानशन अग्रेतनच्युतदेवीकेन ललिताङ्गदेवेन प्रार्थिता विधाय निदान सम्प्राप्येशानकल्प तस्यैव भार्य्या स्वयम्प्रभा नाम देवी समभूदिति पूर्वभवनिर्नामिकेयमिति । 'धम्मचक्क चिध कारित'मित्यादि ( १४७-१९ ), अत्र भगवदवस्थानस्य चिह्नमिद भवत्विति कृत्वा सर्वरत्नमयपञ्चयोजनोच्छ्रितदण्डस्योपरि रत्नमय योजनायामविष्कम्भ वृत्ताकार धर्म्मचकाख्य चक्र कारितवान्, चूर्णौ तु चक्रस्यैतदेव मान दण्डश्च योजनोच्छ्राय एवोक्त इति । 'उज्जाणत्थाण पुरिमताल मिति (१४७-२१), अत्यासन्नत्वाद्विनीताया उद्यानस्थानीय पुरिमताल नगर सम्प्राप्त इति । 'सिधुदेवीं ओयवेइ'त्ति (१५०-१०), सिन्धुनद्या अधिष्ठात्रीं देवता 'ओयवेइ'त्ति पूर्वोक्तक्रमेण साधयतीत्यर्थ , केवलमिह नद्या मध्ये न प्रविशति नापि शर मुञ्चति, किन्तु अष्टमभक्तान्ते स्वत एव चलितासना असौ रत्नमयभद्रासनद्वयादि प्राभृत गृहीत्वोपतिष्ठति, तत सिन्धुदेवीनदेव वैताढ्याधिष्ठातार देव, ततोऽपि तिमिश्रागुहावासिन देवं साधयति, ततश्चक्रवर्त्ती तत्रैव तिष्ठति यावत्सुषेणाभिध सेनापतिश्चर्मरत्नेन सिन्धुनदीमवतीर्य तत्परकूलवर्त्ति खण्ड साधयित्वा समागच्छति, ततश्चक्रवर्त्यादेशात् सेनापतिर्विशिष्टपूजापुरस्सर दण्डरत्नेन तिमिश्रागुहाकपाटोद्घाटन करोति, यस्तु द्वादश योजनानि तुरगारूढ सेनापति शीघ्रमपसरतीत्यादिमवाद सोऽनागमिक इव लक्ष्यते, क्वचिदप्यनुपलभ्यमानत्वादिति, ततश्चक्रवर्ती करिस्कन्धारूढस्तस्यैव करिणो दक्षिणकुम्भविन्यस्तमणिरत्नोद्योत कुर्वस्तिमिश्रगुहा प्रविशति, तत्रात्मन तावन्मणिरत्नोद्योतेनैव मार्गादिप्रकटन भवति, शेषजननिमित्त तु काकिणीरत्नेन उक्तप्रमाणानि वृत्तहिरण्यरेखारूपाणि मण्डलानि करोति, तत्र तिमिश्रगुहा आयामेन पञ्चाशद्योजनानि, वैताढ्यस्य मूले तावद्विस्तरत्वात्, विष्कम्भेन तु द्वादश योजनानि, तत्र प्रविशश्चक्रवर्ती गोमूत्रिकान्यायेन एकस्या भित्तौ पञ्चविंशति

परस्या तु चतुर्विंशतिरित्येकोनपञ्चाशन्मण्डलानि करोति, एतानि च किलैकाङ्गेन द्वादश योजनानि प्रकाशयन्ति अन्येन तु
योजनमेवेत्यतो योजनान्तरितानि करोति, कथ चामूनि करोतीति स्थापनातोऽवसेय, सा चेय—
एव च पद्मोष्ठकपरिकल्पितपड्योजने क्षेत्रे एकस्मिन्पक्षे त्रीणि अन्यत्र तु द्वे मिलितान्यपि पञ्च म-

| | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ |

ण्डलानि भवन्ति, एवमनेन गोमूत्रिकामण्डलकविरचनक्रमेण पञ्चाशद्योजनायामायामपि गुहायामेकोनपञ्चाशन्मण्डलानि
बुद्धरन्त इति वृद्धा, तत्त्व पुन केवलिनो विदन्ति, विशिष्टाम्नायाभावादिति । तस्याश्च गुहाया मध्ये विस्तरत क्षेत्रस-
मासोक्तस्वरूप सान्वर्थनामक नदीद्वयमस्ति, तत्रैकस्या शिलादिकमपि प्रक्षिप्तमुन्मज्जत्येव, कल्लोलैराधूय स्तीरे क्षिप्यत इत्यर्थ,
तेनासौ उन्मग्नेत्यभिधीयते, अपरस्या तु तृणादिकमप्यध एव निमज्जति, तेनेय निमग्नेत्युच्यते, तयोश्च नद्योश्चक्रवर्त्या-
देशाद् वर्द्धकि प्रत्येकमनेकस्तम्भशतयुक्त भित्तिरहितदृढितदीर्घपट्टशालाकार सर्वरत्नमय सङ्क्रम करोति, तेन चाऽऽचक्रवर्तिरा
ज्यपरिसमाप्ते सर्वोऽपि लोक उत्तरति, गुहा च तावन्त कालमपावृतैवास्ते, मण्डलान्यपि तथैव तिष्ठन्ति, उपरते तु चक्रिणि
सर्वमुपरमत इति, एवं च तिमिश्रागुहातो निर्गच्छति चक्री, द्वितीयपक्षसत्ककपाटे च स्वत एवोद्घटेते, न पुन सेनापति-
रुद्घाटयति, अत्रान्तरे चिलातै सम सग्रामे सति नागकुमारविशेषा मेघमुखा नाम देवा अष्टमभक्ताराधनया तैराराधिता
वृष्टि चक्रु, चक्रिणा च चर्मच्छत्ररत्नसम्पुटमध्ये प्रक्षिप्य सैन्य वृष्ट्युपद्रवाद्रक्षित, सम्पुटान्तर्वर्त्यन्धकारापनोदार्थ च मणि
रत्न स्थापयति, क्वेत्याह—'छत्तरयणस्स वत्थिभाए' (पडिच्छभाए वृ०)त्ति ( १५०–१४ ), छत्रवस्तिभागो नाम छत्रम-
ध्यभागवर्ती दण्डप्रक्षेपस्थानरूपस्तत्रेत्यर्थ, वृष्ट्युपरमे च तत सम्पुटाच्चक्रिसैन्य निर्गच्छदुपलभ्य लोकेनोक्त—ब्रह्मणा सृष्ट

मिदमण्डक तत्त इय जगत प्रसूतिरित्येव सर्वत्र प्रवादोऽभूत्, ततोऽपि च ब्रह्माण्डपुराण नाम शास्त्रमभूदिति । ततश्चु-ल्लहिमवन्त देव प्रसाध्य ऋषभकूटे हिमवदधोभागवर्तिनि स्वनाम लिखति,कथमिति चेदुच्यते–उस्सप्पिणी इमीमे तइयाएँ समाएँ पच्छिमे भाए। अहयसि चक्कवट्टी भरहो इति नामधिज्जेण ॥ १ ॥ अहयसि पढमराया अहय भरहाहिवो नरवरिंदो। नत्थि मह पडिसत्तू जिय मए भारह वास ॥ २ ॥ अनेन गाथाद्वयेन स्वनाम लिखित । खण्डप्रपातगुहाप्रवेशादिक तिमिश्रगुहावद्वक्तव्य नानात्व त्वभ्यूह्यमिति, शेष सुगम, यावद् 'गङ्गाकूले नव निहितो उवागच्छति'त्ति ( १५१–४ ), निधिरत्नाराधनार्थमष्टमभक्त तत्र करोति, ततो नव निधय सिध्यन्ति, ते चामी—नेसप्पे १ पडुयए २ पिंगलए ३ सव्वरयण ४ महपउमे ५ । काले य ६ महाकाले ७ माणवग ८ महानिही सखे ९ ॥ १ ॥ एषा च स्वरूपमिद—चक्कट्ठपइट्ठाणा अट्ठुस्सेहा य नव य विक्खभे । बारस दीहा मजूससठिया जण्हवीइ मुहे ॥ १ ॥ व्याख्या—प्रत्येकमष्टसु चक्रेषु प्रतिष्ठिता अष्टौ योजनान्युच्चैस्त्वेन विस्तरेण तु नव योजनानि दैर्घ्येण द्वादश योजनानि मञ्जूषासस्थिता जान्हवी–गङ्गा तस्या मुखे–तत्समीपे भवन्तीति गाथार्थ ॥ किमयास्ते निधयो भवन्तीत्युच्यते—वेरुलियमणिकवाडा कणगमया विविहरयणपडिपुण्णा । पलिओवमट्ठितीण देवाण ते उ आवासा ॥ १ ॥ एतेषु च निधिषु नीतिपुस्तकाभरणवस्त्ररत्नहिरण्यप्रहरणातोद्यादय पदार्था समुत्पद्यन्ते, ते च सविस्तरा स्थानाङ्गादिभ्योऽवसेया इति । अस्य च भरतचक्रिण एकेन्द्रियस्वरूपाणि चत्वारि रत्नानि चक्रच्छत्रदण्डखड्गरत्नलक्षणान्यायुधशालायामुत्पन्नानि, चर्मरत्नमणिरत्नकाकिणीरत्नानि तु श्रीगृहे, सेनापतिगृहपतिवर्द्धकिपुरोहितरत्नानि तु पञ्चेन्द्रियस्वरूपाणि चत्वारि विनीताया नगर्या, गजतुरगरत्ने तु वैताढ्यमूले, स्त्रीरत्न तु विद्याधरेभ्य

उत्पन्नमिति । 'पडुल्लकियमुही' ( १५१–७ ), पाण्डुविच्छायमुखीत्यर्थ । इति चक्रिविजयवक्तव्यता । अङ्गारदाहक दृष्टान्त –किल कश्चिदङ्गारविक्रयी तदर्थमरण्य ययौ, तृडार्त्ता गृहे कृच्छ्रेणागतो मूर्च्छित पतित स्वप्न पश्यति–यथा जल पिबता मया सर्वेऽपि समुद्रसरित्तडागकूपादिजलाशया तिर्यग्लोकवर्त्तिनो निष्ठा नीतास्तथापि पिपासा न शाम्यति, अतोऽपरजलाशयान्वेषणप्रवृत्तेन तुच्छजलो जीर्णकूप एको दृष्ट, तत्र च रज्जुबद्ध कुशपूलक क्षिप्त स च जल मुञ्चन् कतिपयजलविन्दुयुक्तस्तीरदेशमागत, तज्जल स पातुमारब्ध, तत्कि यस्य समुद्रादिजलै पिपासोच्छित्तिर्नाभूत् तस्य तै कतिपय विन्दुभिरसौ भविष्यति ?, एव युष्माभिरपीत्यादि उपनय सुगम एव । वैतालीयाध्ययन ( प० १५२ ) सूत्रकृताङ्गद्वितीयाध्ययनमिति । 'श्रावकाणा न सन्ति व्रतानी'ति ( १५७–५ ), निरुपचरितानि परिपूर्णानि व्रतानि किल महाव्रतान्येवोच्यन्तेऽतस्तदभावाच्छ्रावकाणा व्रतानि न सन्तीत्युच्यते, यानि तु सन्ति तान्याह—'किन्त्वि'त्यादि । 'अनार्यास्तु पश्चात्सुलसायाज्ञवल्क्यादिभि कृता' इति ( १५८–४ ), इह भावार्थ कथानकगम्य, तच्च सक्षेपादिद–इह सुलसासुभद्रानामक परिव्राजिकाद्वयमासीत्, सुलसा अतीवानेकशास्त्रकोविदा अत्रान्तरे याज्ञवल्क्यनाम्ना परिव्राजकेन यो मा वादे विजयते तस्याह शिष्य इत्युद्घोषणापूर्वक पटहो दापित , सुलसया च जितोऽसौ, तच्छिष्यत्व चानेन प्रपन्नम्, अतिपरिचये च तयोरकार्यप्रवृत्तिरभूद्, गर्भश्च सुलसाया समभवद्, विज्ञाते च सुभद्रया निष्ठुरमुपालब्धाऽसौ, प्रच्छन्ने च धृता, अन्यस्मिंश्च वासरे रात्रौ पुत्र प्रसूता, अविज्ञाता च सुभद्रया पिप्पलवृक्षस्याधस्तात्पुत्र परित्यज्य परिव्राजकेन सह रजन्यामेव निर्जगाम, प्रातश्च पदानुसारेणान्वेषयन्त्या सुभद्रया डिम्भो दृष्ट , अय च बुभुक्षितो विस्रसात पिप्पलफल

मुखे पतितमास्वादितवानिति पिप्पलाद इति नाम तस्य कृतं, वृद्धिं नीतं, पाठितश्चासौ सुभद्रया, वाग्मी चातीव जातः, श्रुतमातृपितृसम्बन्धश्च मातरि पितरि च प्रद्वेषमापन्नोऽनार्यान् वेदांश्चकार, तेषु चेदं प्ररूपितवान्-यदुत राजभिरशिवादिशान्तिनिमित्तं स्वर्गावाप्तये च पशुतुरगगजमानुषादिभिर्यागः करणीय इति, तस्य च 'अलिणरि य वसुराया' इत्यादिकथानकप्रसिद्धः पर्वतको नाम मित्रमभूत्, तेन चोक्तं-अजैर्यष्टव्यमिति वेदेऽपि प्रतिपादितमेवेति शोभनं त्वया प्ररूपितमिति। अपरं च मधुनामा राजपुत्रः कुत्रचित् स्वयंवरमण्डपमिलितसमस्तराजवर्गेणापमानितस्तेषु च प्रद्वेषमापन्नो मृत्वा व्यन्तरेषूत्पन्नः, स चाचिन्तयत्-भव्यमिदं परिव्राजकसुतेन परिकल्पितं, यद्येतद्राजानोऽनुतिष्ठन्ति तदा सर्वेऽपि अमी नरकं यान्तीति मम वैरसिद्धिर्भवतीति विचिन्त्य च तमुवाच-प्ररूपय त्वमिदं लोके साहाय्यमहं करिष्यामीत्यभिधाय सर्वत्र रोगानुत्पादितवान्, परिव्राजकेन च राजानोऽभिहिताः-यदि पश्वादिभिर्यज्ञं कुरुत तदा सर्वमिदमुपशाम्यति, तेऽपि च पश्वादयो यज्ञे निहता दिवं यास्यन्ति, नात्र कश्चिद्दोष इति, राजानोऽपि च तथैवानुष्ठितवन्तः, त्रिदिवगमनप्रतीतिनिमित्तं यत्र निहतपश्वादीन्विमाने समारोप्य नभसा गच्छतो मधुदेवो जनस्य दर्शयति रोगांश्च सर्वानुपशमयतीति लोकस्यात्रार्थे स्थिरता बभूव, ततश्च पिप्पलादेनेत्थं प्ररूपयता गच्छता कालेन राज्ञः सकाशादानीय मोक्षमेतौ गमिष्यत इति व्याजेन मातापितरौ यज्ञे हुतौ, तदर्थत्वादेव सर्वारम्भस्येति, तत्कालादारभ्यानार्यवेदप्रवृत्तिरिति सक्षेपो, व्यासार्थिना तु हरिवंशोऽन्वेषणीय इति॥ आसग्गीवे १ तारए २ मेरए ३ महुकेटवे ४ निसुभे अ ५। बलि ६ पह्लाए ७ तह रामणे य ८ नवमे जरासिंधू ९ ॥ (१५९), अत्र चतुर्थे वासुदेवो मधुरेव, कैटभस्तु तद्भ्राता, कैटभेनोपलक्षितो मधुर्मधुकैटभ इति द्रष्टव्यमिति।

मरुदेवि १ विजय २ सेणा ३ सिद्धत्था ४ मङ्गला ५ सुसीमा य ६। पुहई ७ लक्खण ८ सा(रा)मा ९ नदा १० विण्हू ११ जया १२ (रासा)मा १३ ॥१॥ सुजसा १४ सुवया १५ अइरा १६ सिरि १७ देवी य १८ पभावई १९। पउमावई य २० वप्पा २१ सिवा २२ वम्मा २३ तिसलाइय २४ ॥२॥ इति तीर्थकरमातर (१६०) नाभी १ जियसत्तू आ २, जियारी ३ सवरे इअ ४। मेहे ५ धरे ६ पइट्ठे अ ७, महासेणे य ८ खत्तिए ॥१॥ सुग्गीवे ९ दढरहे १० विण्हू ११, वसुपूज्जे अ खत्तिए १२। कयवम्मा १३ सीहसेणे अ १४, भाणू १५ विस्ससेणे इअ १६ ॥ २ ॥ सूरे १७ सुदसणे १८ कुभे १९ सुमित्तु २० विजए २१ समुद्दविजए अ २२। राया य आससेणे २३ सिद्धत्थेविअ खत्तिए २४ ॥ ३ ॥ इति तीर्थकृत्पितर । ( १६१ ) सुमगला १ जसवती २ भद्दा ३ सहदेवी ४ अइर ५ सिरि ६ देवी ७। तारा ८ जाला ९ मेरा य १० वप्प ११ तहय चुलणी अ १२ ॥ १ ॥ इतिचक्रवत्तिमातर । ( १६१ ), उसभे १ सुमित्तविजये २ समुद्दविजए य ३ अस्ससेणे अ ४। तह वीससेण ५ सोरिअ ६ सुदसणे ७ कित्तिविरिए य ८ ॥ १ ॥ पउमुत्तरे ९ महाहरि १० विजये राया ११ तहेव बभे अ १२। अवसप्पिण्यामस्या पितृनामानि चक्रवत्तिनामिति । वासुदेववलदेवा भिन्नमातृका एव भ्रातरो भवन्तीति वासुदेवमातृनामान्याह—'मियावती' गाहा ( प० १६२ ) पाठसिद्धैव । वलदेवमातूराह—'भद्द' गाहा, सुगमा । पितरस्त्वमीपाम भिन्ना एवेत्याह—'रवइ पयावइ' गाहा ( प० १६३ ) सुबोधा । 'प्रकृतेर्महानि' ( १७१–१४ ) त्यार्या व्याख्या—अव्यक्तं प्रकृतिरित्यनर्थान्तर, तस्मादव्यक्तात्प्रकृतिलक्षणाव्यक्त–महदादिकमुत्पद्यते, महानिति वुद्धे सज्ञा, प्रकृतेर्बुद्धिरुत्पद्यत

१ प्रत्यन्तरे नैता गाथा किन्तु इति गाथाया इत्यादिगाथाभि इत्यादिगाथाभि इत्याद्युक्त ।

इत्यर्थ , ततोऽहमिति प्रत्यय , ततोऽपि पोडशको गण , स्पर्शनादीनि प्रसिद्धान्येव पञ्च इन्द्रियाणि, अपराण्यपि वाक्पाणिपादपायूपस्थमनोलक्षणानि पञ्चकर्मेन्द्रियाणि, तथा रूपतन्मात्र रसतन्मात्र गन्धतन्मात्र स्पर्शतन्मात्र शब्दतन्मात्रमित्येव पञ्च तन्मात्राणि, एवमेप पोडशको गण , तस्मादपि च पोडशकगणमध्यात् पञ्चभ्यस्तन्मात्रेभ्य सकाशात्पञ्च भूतान्युत्पद्यन्ते, तद्यथा–रूपतन्मात्रात्तेजो रसतन्मात्रादापो गन्धतन्मात्रात्पृथ्वी स्पर्शतन्मात्राद्वायु शब्दतन्मात्रान्नभ , इत्येव चतुर्विंशतिस्तत्त्वानि, पञ्चविंशतितमो जीव इति पञ्चविंशतिसंख्यानि तत्त्वानीत्यार्यार्थ ॥ 'राया गमेति त्ति (१७२–२१) राजा देवीमनुनयतीत्यर्थ , 'किं मे रज्जेणे'त्यादि, किं मम राज्येन किंवा त्वया इत्यर्थ । द्वितीयवरवरिका समाप्ता ॥

साम्प्रतमुपसर्गेषु विपमपदानि विव्रियन्ते–'पाणीसु भोत्तव'त्ति (१८९–१३), आह–ननु तीर्थकृता सर्वदैव पाणिभोजित्वात्किमनेनाभिग्रहेण साध्यते ?, सत्य, किंतु यथा सवस्त्रधर्मख्यापनार्थं शक्रन्यस्त वस्त्र प्रतीच्छति तथैव सपात्रधर्मख्यापनार्थं प्रथमपारणक पात्र एव करोति तत ऊर्ध्वं पाणिभोजीति केचित् मन्यन्त इत्यावश्यकचूर्णि । 'कुटलविंटले'त्ति (१९३–४), मन्त्रवादिनिमित्तादिभिर्जीवतीत्यर्थ , 'बहुसमोइय त्ति (१९३–५), बहुभिर्जनैर्मिलितै समोदते–सहृष्यतीति बहुसमोदित , व्यन्तरत्वात्क्रीडाप्रियत्वात् नैकाकिनस्तस्य रतिरितिभाव । इत्यासन्न कश्चन पुरुष गच्छन्त शब्दयित्वा भण तीत्यादि सुगम । 'महिसिंदुक्खस्स'त्ति ( १९४–१५ ), खर्जूरीवृक्षस्येत्यर्थ , । 'केई वर सिरसाण वत्थपत्त'मित्यादि ( १९५–९ ), यदि किल शोभने स्निग्धप्रदेशे पतित भवति तदा शिष्याणा वस्त्रादिलाभ सूचयति, विपर्यये तु विपर्यय इति । 'सो कुहाडो से उद्धोट्ठिओ'त्ति ( १९६–९अभिमुहो वृ० ), पततस्तस्य कुठार 'उद्धोट्ठिउ'त्ति उर्द्धमुखीभूत शिर-

स्यादिष्ट इति भाव । 'कूइगादि'त्ति ( १९८-४ ), कूचिका नाम दध्न उपरि द्रवस्वरूपो माथुशब्दतया ख्यातो वस्तु-विशेष, स च किल जीरकादिभि संस्कृतोऽतीव स्वादुर्भवतीति । 'वाउलाणि'त्ति ( १९८-५ ), वहुप्रयोजनतया व्याकुलानीत्यर्थ, भण्डीरमणो यक्ष, भण्डी तु गन्त्रीति । 'महुसित्थचिक्खल्ल' इति ( १९९-१० ), चिक्खल्लो हि समयपरिभाषया त्रिधा भवति-मधुसित्थुक पिण्डक चिक्खल्ल एव च, तत्र मण्डनार्थं चरणेषु यावति स्थाने योषितोऽलक्तक ददति तावन्त देश यत्र चरणावनुलिप्येते स मधुसिक्थुक, अर्द्धशुष्क पिण्डिकाबन्धयोग्य पिण्डक, यत्र त्वतिबहुचरणा निमज्जन्ति स चिक्खल्ल एवाभिधीयते, तदुक्तम्-'तिविहो उ होइ उल्लो, महुसित्थो पिडओ य चिक्खल्लो । लत्त पहलित्ति-उडुय खुप्पिज्जइ जत्थ चिक्खल्लो ॥ १ ॥' इह तु मधुसित्थुकेनाधिकार, तत्र निमग्नपदगतलक्षणान्युपलभ्य पुष्प चिन्तयतीत्यादि सुगम । 'एएहिं लक्खणेहि जुत्त ण एएण समणेण होउ'त्ति ( १९९-१२ ), इत्थमिह सम्बन्ध -एतैर्लक्षणै विद्यमानैर्नानेन श्रमणेन भवितु युक्तम्, अथ चासौ श्रमणो दृश्यते राज्योचितोऽपीतिभाव । 'मखो'त्ति ( १९९-१७ ), केदारपट्टिक 'भडीसुणएणे'त्यादि ( २००-१० ), यथा कन्दुकश्वाऽभिलषन्नपि मण्डकादिक न किञ्चिल्लभते, तथा तेनापि न किञ्चिल्लब्धमितिभाव । 'धीयाराण दातु'मित्यादि, ( २००-१५ ), निजकोपकरण धिग्जातीयेभ्यो-ब्राह्मणेभ्यो दत्त्वा, 'सउत्तरोट्ठ मुण्ड'त्ति ( २००-१५ ) मुण्ड मुण्डनमुच्यते, ततश्च समुख शिरश्च मुण्डयित्वा गत स्वाम्यन्वेषणायेति भावार्थ । 'जेण ज कभल्ल ( करुल्ल वृ० ) आसाइय'मित्यादि-(२०१-२), तेषा मध्ये येन गोपेन यत्कर्पर प्राप्त स तत्रैव जेमित इति । 'तवेण सुत्तेणे त्यादि ( २०२-१४ ) श्लोकव्याख्या—जिनकल्प प्रतिपित्सुश्चतुर्थादिषण्मासान्त-

तपोऽभ्यासेनात्मान भावयति, यद्येतावत्तप कुर्वाण प्रथममेव न बाध्यते तदा जिनकल्प प्रतिपद्यते, नान्यथेति भाव, सूत्र च नवपूर्वादिलक्षण जिनकल्पोचित तथाऽभ्यस्यति यथा पश्चानुपूर्व्यादिक्रमेणापि परावर्त्तयितु शक्नोति, सत्त्व–परीष हाद्यक्षोभ्यत्व चैतसिकोऽवष्टम्भ, तच्च 'पढमा उवस्सयमी'त्याद्यनन्तरवक्ष्यमाणगाथोक्तस्थानेषु कायोत्सर्गप्रदानत प्रथम मेव परीक्षणीयमिति सत्त्वभावना, एकत्वभावना त्वेकाक्येव पर्यटन् यदि विस्रोतसिकादिभिर्न बाध्यते तदा जिनकल्प प्रति पद्यते, नान्यथेति, बलभावना तु एकाङ्गुष्ठाद्यवष्टम्भेन चिरस्थायित्वादिरूप शरीरावष्टम्भस्तत्परीक्षणरूपा, एषा पञ्चधा तुलना जिनकल्प प्रतिपित्सो प्रथममेव भवतीति श्लोकार्थ । 'अज्ज अम्ह अतर'ति ( २०३–१ ), अद्यास्माकमुपरासो वर्त्तत इत्यर्थ । 'चारियत्ति काऊण ओड(उड्डु)वालगे'त्यादि ( २०४–१ ), चारिका हेरिका एत इतिकृत्वाऽध शिरसोऽरटे कूपे प्रक्षिप्यन्त इति तात्पर्यार्थ, तत्र गोशालक प्रथममेव क्षिप्तो, भगवॉस्तु नाद्यापीत्यत्रान्तरे मोचिता इति । 'से सोणिय रचिऊण ( सुसोधित रधिऊण वृ० )'ति ( २०५–८ ), यस्तव गर्भा मृत समुत्पद्यते स शोणित एव 'रुचिऊण'ति श्लक्ष्ण चूर्णयित्वा पायसमध्य प्रक्षिप्य सुतपस्विने देय इति भावार्थ, क्वचित्तु 'सुशोधित'ति पाठस्तत्र सुसस्कृतमिति व्याचक्षते, 'आश्गडीयो' ( २०५–९ ), गतागतानि करोति, द्वार गृहस्य परावर्त्तितमिति नोपलक्ष्यते । 'खुखुणका' ( २०६–१ ) नाम घुर्घुरकास्ते धावता पतता भज्यन्ते । 'निउड्डुफडियाए'त्ति ( २०६–९ ), अवनत उन्नतश्च भूत्वा निरीक्षते प्रस्ता वोऽत्र याज्ञाया न वेति । 'अत्थारियादिट्ठत हियए करेइ'त्ति ( २०७–१ ), अत्थारिकानाम ह्रासिकास्तेषा दृष्टान्त, स चाय–इह यथा कस्मिन् ग्रामे कश्चित्कृषीवलो व्रीह्याद्यन्यतरधान्यं लवनकालोचित प्रभूत दृष्ट्वा चिन्तयति–यद्येतदहमात्म

नैव लविष्यामि तदा प्रभूतेनापि कालेन निष्ठा न यास्यति, तत सर्वमपि ग्रामवासिन लोकमभ्यर्थ्य प्रभूतदिनलव्यमपि धान्य वहुभिर्दासिकै समन्वितोऽल्पेनेव कालेन लुनाति, तथा भगवानपि चिन्तयति–तत्र गतेन मया प्रभूतकालवेद्यम ध्यशुभ कर्म्म तन्निवास्यनार्यजनसाहाय्यात्स्वल्पेनापि कालेन वेदनीयमित्येवरूपमत्थारियादृष्टान्त चेतसि निधाय प्रविष्टोऽनायग्निति । 'घग्फोडो त्ति ( २०७–८ ) वहुभक्षक, ततो महद्भाजन कूरस्य भूत्वा तैर्दत्त 'न नित्थरति'त्ति ( २०८–८ ) न शक्नोति भोक्तुमतिवहुत्वात्, तत उद्धरितभक्त कूपीवले कोपात्तस्यैव मस्तके क्षिप्त, ततश्च केलीकिरयात् 'उफिलतो'त्ति ( २०७–९ ) वलात् गच्छति । 'छिन्नट्ठाण'मिति ( २०८–६ ), यत्रातिभीषणत्वात्पथिकादयो न सचरन्ति तच्छिन्नस्थानमिति । 'छम्मासपडिलग्गतो'त्ति ( २०८–११ ), षण्मास यावद्रोगी भूत्वा आरोग्य सम्रुपकरणानि गृहीत्वा तत्रागत इति । 'मुरे तस्स सागारिय दाउ'त्ति ( २१०–१ ), सागारिक नाम मेहन लिङ्गमिति यावत् । 'जाणुकोप्परमाय'त्ति ( २१०–११ ), जानुनी च कूर्पूरे च जानुकूर्प्पर तस्यैव यदि पर माता, अपरस्यापत्यस्याभावादिति, सामयिकी चेय निरपत्याया सज्ञेति । 'उल्लपडसाडउ'त्ति ( २११–१ ), लौकिकी रूढिरिय काचिद् यदुत व्यन्तराद्याराधन सार्द्रवस्त्रविधेय इत्थमेव तत्परितुष्टिसिद्धेरिति सार्द्रवस्त्रोऽसाविति । 'जहा बभचेरेसु'इत्यादि ( २१२–२ ), आचाराङ्गप्रथमश्रुतस्कन्धस्य नवाप्यध्ययनानि सामान्यतो ब्रह्मचर्याध्ययनानीत्युच्यन्ते, तेषु मध्ये उपधानश्रुताख्येऽध्ययने यथा महावीरस्योपसर्गा वर्ण्यन्ते तथाऽत्र द्रष्टव्या इति भाव, सूत्रोक्तमेव श्लोकावयवमाह—'छुच्छुकरती'त्यादि ( २१२–२ ), तेऽनार्या आत्मीयान् शुन छूत्कृत्वा भगवन्तमुद्दिश्य मुञ्चन्ति, इद चाहु –कुक्कुरा

श्वान श्रमणमेन दशन्वित्यादि। 'सो अलेह्डो आसि'त्ति ( २१२–४ ), स वर्षाकालश्चतुर्विधाहाररहित आसीदिति भाव , अपर च मासद्वय तत्रैव निरशनो विहृत इति पाण्मासिक च क्षपणमिहाभूदिति। 'पुप्फा य पच्चायाय त्ति ( तिलपुप्फजीवा उद्दाइत्ता एगाए तिलसंगलियाए पच्चायाहिति वृ० २१२–९ ), ते च सप्तापि तिलपुष्पजीवा मृत्वा तस्यैव तिलस्य शिङ्गाया सप्त बीजान्युत्पन्ना इति भाव । 'नामनिग्गय'त्ति ( २१३–२ ), प्रसिद्धेत्यर्थ । 'सीयलिया तेयलेसा निसरति, सा जबुद्दीव बाहिरओ वेढेति' ( २१४–१ ), भगवान् शीतलेश्या निसृजति, सा च शीतलेश्या वैश्यायनसत्कतेजोलेश्या परत प्रक्षिप्यात्मना सर्व जम्बूद्वीप बहिस्ताद्वेष्टयति, एतदुक्त भवति–भगवत सम्बन्धिनी शीतलेश्याऽन्त स्थिता जम्बूद्वीप वेष्टयति, तेजोलेश्या तु तत्परिक्षिप्ता बहि स्थिता त वेष्टयतीति, एतदेवाह–'भगवतो सीयलीया तेजोलेसा अब्भितरओ वेढेइ, इयरावि त परियच्चइ'त्ति, पाठान्तराण्यप्येतदनुसारतो ज्ञेयानीति । 'पारणए सणहाए कुम्मासे'त्यादि ( २१४–५ ), अङ्गुलीचतुष्टयनखाक्रान्तहस्ते यका मुष्टिर्बध्यते सा सनखा कुल्माषपिण्डिके त्युच्यते 'एगेण वियडासएण'इत्यादि ( २१४–५ ), एकेनोष्णोदकचुलुकेनेत्यर्थ । 'सखित्तविउलतेअलेस्से'त्ति ( २१४–६ ), कार्यमन्तरेणामोचनात्सक्षिप्ता–अन्तर्व्यवस्थापिता सत्ताया कृता विपुला तेजोलेश्या येन स तथा । 'कूवतडे दासीए'इत्यादि (२१४–११), कूपतटे गत कयाचिद्दास्याऽनिष्ट किञ्चिदुक्तस्तस्यै कुपित तेजोलेश्या मुक्त्वा ता दग्धवान् अतो निश्चित मम तेजोलेश्या समुत्पन्नेति, पार्श्वनाथशिष्याश्च तस्य षट् दिक्चरा मिलिता , तैश्चाष्टाङ्गनिमित्त गोशालस्योद्दिष्टमतस्तेन निमित्तालोकमात्रेणाजिनोऽपि–अकेवल्यपि केवली अहमित्येव प्रलपन्विचरतीति भावार्थ । 'दूपकाइ'त्ति

( २१४–१६ ), वेकिकाया शरीरचिन्तायामितियावत्, 'नावाकडएण'ति ( २१४–१६ ), नावारूढ इत्यर्थ । 'पढमि-
याए चउरो'त्ति ( २१५–१२ ), भद्राख्याया प्रथमप्रतिमाया चत्वारश्चतुष्कका यामाना भवन्तीत्यर्थ, एतदेव भावय-
ति—"पुवाए दिसाए चत्तारि जामा" इत्यादि पूर्वस्या दिशि चत्वारो यामा इत्येव चतसृष्वपि दिक्षु चत्वारश्चतुष्कका यामाना
भवन्तीति । 'बीयाए अट्ठ'त्ति (२१५–१२), महाभद्राख्याया द्वितीयप्रतिमाया अष्टचतुष्कका यामाना भवन्तीति, एतदेव
स्पष्टयति—'पुव्वाए चिचतुरो'त्ति ( २१५ १२ ) पूर्वस्या दिशि द्वौ चतुष्ककौ यामाना भवत , एतावन्त काल पूर्वाभिमुख
कायोत्सर्गेण तिष्ठतीत्यर्थ , एव शेपदिक्ष्वपि वाच्यमिति, उपसहारमाह—'एते अट्ठ'त्ति ( २१५–१३ ), एते पूर्वप्रतिज्ञाता
श्चतसृष्वपि दिक्षु अष्टौ चतुष्कका यामाना भवन्तीति, चतुर्दिनमानत्वादस्या इति भाव । 'तइयाए वीस'ति (२१५–१३),
सर्वतोभद्राख्याया तृतीयप्रतिमाया विशतिश्चतुष्कका यामाना भवन्तीति, एतदेव दर्शयति—'पुव्वाए दिसाए बेचउक्का'
इत्यादि ( २१५–१३ ), पूर्वस्या दिशि द्वौ चतुष्कौ यामाना भवत , एव दशसु दिक्षु विशतिश्चतुष्कका यामाना भवन्ति,
एतदेवाह—'वीस ति' एवमेव उक्तक्रमेण विशतिश्चतुष्कका यामाना भवन्ति, दशदिनमानत्वादस्या इति भाव । अत्र
च विमलाख्यामूर्ध्वदिशमधिकृत्य यदा कायोत्सर्ग कुरुते तदा ऊर्ध्वलोकव्यवस्थितान्येव कानिचिद्विमानादीनि द्रव्याणि
ध्यायति अधोदिशि तु तमाख्याया व्यत्ययो वाच्य इति । 'जहासभव सेसाणिवी'त्यादि ( २१६–२ ), अन्यान्यपि
'अहीणपणिदिअगेहि सविदिएहि गुत्तेहि'इत्यादीनि शास्त्रान्तरोक्तान्येकरात्रिकीप्रतिमासभवीनि विशेषणानि
वाच्यानीति । 'ईसि पब्भारगओ' ( २१६–२ ), एतद्व्याचष्टे—'इसि ओणयकाओ'त्ति । 'ततो स्पृयति'(२१७–११),

तत –त्रिशलादेवीरूपादनन्तर सूपकार–रसवतीकार विकुर्वतीत्यर्थ । 'किह सो'त्ति,कथमसौ विवुधित इति प्रश्ने उत्तरमाह— 'तत्तो खधावार'मित्यादि(२१७–११),ततस्त्रिशलादेवीरूपादनन्तरमेव स्कन्धावार विकुर्वति स च स्कन्धावारो भगवत समीपे आवास गृह्णाति, तत्र च सूपकार किल चुल्लीविरचनाय पाषाणानलभमानो भगवतश्चरणद्वयान्तरे वह्नि प्रज्वाल्य 'उक्खं'ति उखा स्थालीमुपरि पादयोर्व्यवस्थाप्य पचति भक्तमिति । 'पक्कण'ति (२१७–१३), चण्डाल विकुर्वति, स च तीक्ष्णतुण्डशकु-निभृतपञ्जराणि भगवत कर्णबाहुमूलादिप्रदेशेष्ववलम्बते, ते च पक्षिण पञ्जरच्छिद्रैर्मुखानि नि सार्य भगवच्छरीर भक्ष-यन्तीति भावार्थ । 'सागारिय कसाइय'ति ( २१९–१ ), त्वचमपकृष्य विकृत लिङ्ग करोतीत्यर्थ । 'अन्ने भणति–पचालदेव जहा'इत्यादि(२१९–२), अन्ये त्वभिदधति–लोकप्रसिद्धपञ्चालाभिधानदेववाविशेपसदृश रूप सङ्गमक करोति, तच्च कीदृशमिति न ज्ञायते, विशिष्टसम्प्रदायाभावादिति । 'सधिमग्ग सोहेइ, पडिलेहेइ य'त्ति ( २१९–१४ ), दिवा लोकस्य पश्यत खात्रखननमार्ग शोधयति–कण्टकादि ततोऽपनयति, निर्गमप्रवेशस्थानानि च प्रत्युपेक्षते, खात्रखनो पकरणानि च भगवत्समीपे मुञ्चतीति । 'एगे भणति–जहा तद्दिवस खीर'मित्यादि ( २२०–१५ ), एके प्रतिपाद यन्ति–न दोसीणेण–पर्युषितेन क्षीरान्नेन तया भगवान् प्रतिलाभित , किन्तु तस्याः स्वकीयगृहक्षीर नास्ति याचितमेव भवति, न चोत्सवदिने याचितमपि तत्तया लब्ध, लोकस्य स्वत एव तस्मिन्दिने तत्प्रयोजनत्वाद्, अतो द्वितीयदिने 'ऊहारिऊण'ति ( २२०–१५ ) लोकात्पयो याचित्वा परमान्नमात्मार्थमुपस्कृत तेन प्रतिलाभित इति भाव । 'अस-भस्सो'( २२१–२ ), असभाष्योऽनालपनीय इत्यर्थ । 'सेसा देवा इदेण वारिय'त्ति ( २२१–४ ), सङ्गमकेन सह

तदीया देव्यो मुत्कलिता , शेषास्तु तत्परिवारभूता देवा निषिद्धा – नानेन सह मेरौ गन्तव्यमिति निवारिता इति भाव । स च सामानिकत्वाद्द्विसागरोपमायु , तत्र च समये एक सागरोपममतिक्रान्तमेक तु शेषमासीदित्याह—'तस्स य'इत्यादि ( २२१–४ )। 'एलुग विक्खभित्ता'इत्यादि ( पृ० २२२ ), एलुग नाम गृहदेहली ता विष्कम्भ्य–एक पादं तस्या अर्वाग्भागे एक च परभागे कृत्वा यदि दास्यति तदा ग्रहीष्यामीतिभाव इति । 'जग्गहो घोसितो'त्ति ( २२३–१० ), यद्ग्रहो नाम यो यत्प्राप्स्यति तस्यैव तदित्युद्घुष्टमिति । 'होडीओ नाम' ( २२३–११ ), लूषक पुरुष । 'वर तेण सम मम तम्मी'त्यादि (२२३–१५), चम्पाया नगर्यां यस्य कस्यचित्सत्का भविष्यति तस्यैवैना समर्पयिष्यामि, ततस्तेन सह मम गमनागमन–मैत्री भविष्यतीति भाव । 'ताए ( ताहे पृ० ) सो पेल्लिउ'त्ति ( २२४–९ ), तया मूलया स–परिजनोऽनन्तरोक्तवचनेन भेपित इति भाव । 'बहिरकुट्टडिय'त्ति ( २२४–९ ), तालितद्वारा कृतेति भाव । 'मम भगिणीधूअ'त्ति (२२५–४), किल मृगापत्या भगिनी पद्मावती दधिवाहनेन परिणीता धारिणी च पद्मावत्या' सपत्नीतिकृत्वा धारिण्यपि मृगापत्या भगिन्येवेति भाव । 'को ह्यात्मा भगवानाहे'त्यादि ( २२५–१६ ), परिज्ञानपरीक्षानिमित्त द्विजेन भगवान्पृष्ट –क आत्मेति, किं पञ्चभूतात्मक उत तद्व्यतिरिक्त इत्येव पृष्टे भगवान् प्रत्युत्तरयति—'योऽहमित्यभिमन्यत' इति, सुरयह दु ध्यहमित्यादिअहप्रत्ययकर्तृत्वेनात्मान योऽभिमन्यते–निर्दिशति स पञ्चभूतव्यतिरिक्तोऽन्तर्मुखवृत्त्याऽहप्रत्ययग्राह्य आत्मेति भाव , एव भगवता प्रोक्ते द्विज प्राह—'स कीदृश इति' शरीरतया परिणतभूतव्यतिरिक्त हि न कश्चिदात्मान पश्यामो, यदि पुनरसौ तद्व्यतिरिक्त कश्चिदस्ति तदा कीदृशोऽयमिति तस्य स्वरूप

वाच्यमिति द्विजेन पृष्टे त्रैलोक्यबन्धुराह—'सूक्ष्मोऽसा'विति ( २२६–१ ), इदमुक्त भवति–अमूर्त्तत्वात्कर्मसम्बन्धापेक्षया कथञ्चिन्मूर्त्तत्वेऽपि कर्म्मपुद्गलाना सूक्ष्मत्वाच्चानतिशयिनामगम्यत्वात् सूक्ष्मोऽसौ, ततश्च सूक्ष्मत्वेनाय न दृश्यते, न पुन रसत्त्वेनेति भाव । इत्येव च तीर्थकृताऽभिहिते सूक्ष्म किमुच्यत इति सामान्येनैव सूक्ष्मस्य स्वरूपमजानानो द्विज पृच्छति–'किं तत्सूक्ष्ममिति ?', सूक्ष्मस्य स्वरूपमेवाह, न वेद्मि कि तत्सूक्ष्ममुच्यत इति, अत्र भुवनगुरराह—'यन्न गृहीम' इत्यत्र यदनतिशयिना छद्मस्थेन करणैर्ग्रहीतु न शक्यते तत्सूक्ष्ममिति, अत्र भगवद्विवक्षामजानानो विप्र आह—'ननु शब्दगन्धानिला'इति, ननुशब्द प्रश्नाक्षेपे, ननु यदि यन्न गृह्यते तत्सूक्ष्ममभ्युपगम्यते तदा शब्दानिलगन्धादयश्चक्षुषा न गृह्यन्ते, अत एतेऽपि कि सूक्ष्मा इत्यत्र भगवानाह—'नेति' हन्त नैते शब्दादय सूक्ष्मा, कुत इत्याह—'एते इन्द्रियग्राह्या'इति, एते इन्द्रियग्राह्यत्वान्न सूक्ष्मा इत्यर्थ, एतदुक्त भवति–नैतन्मया विवक्षित यदुत यच्चक्षुषा न गृह्यते तत्सूक्ष्म, किन्तु सर्वैरेवेन्द्रियैर्यन्न गृह्यते, हृषीकातिक्रान्तज्ञानपरिच्छेद्य तत्सूक्ष्ममिह प्रतिपिपादयिषित, एते तु शब्दगन्धानिला यथाक्रम श्रोत्रघ्राणस्पर्शनेन्द्रियग्राह्या इति कुत एतेषा सूक्ष्मत्वप्रसङ्ग इति । इन्द्रियग्राह्या शब्दादय इति यदुक्त भगवता तदुपजीव्य ब्राह्मण आह—'ते न ग्रहणमात्मे'ति, गृह्णातीति ग्रहणमिति कर्त्तरि ल्युट्प्रत्यय, ततश्च ते–तव न–वस्तूना ग्राहक आत्मा प्राप्नोति शब्दादीनामिन्द्रियग्राह्यत्वेनाभिधानाद्,एतदुक्त भवति–एते इन्द्रियग्राह्या इति भवता प्रतिपादित, एव पञ्चेन्द्रियाणि वस्तूना ग्राहकाण्युक्तानि भवन्ति नात्मेति, अत्र भगवान् सिद्धसाध्यता मन्यमान आह—'ननु ग्राहयिता स'इति, इदमुक्त भवति–इन्द्रियाणि ग्राहकाणीत्यभ्युपगम्यत एवास्माभिः, जीवस्तु ग्राहयिता, तथाहि—अर्थ-

मिन्द्रियाणि गृह्णन्ति जीवस्तु तानि तत्र प्रयुङ्क्ते, अतो वस्तूना ग्राहकाणीन्द्रियाणि ग्राहयिता जीव इति न किञ्चिदनिष्ट, करणविवक्षया करणान्यप्यमूनि भवन्ति,अनन्तधर्माध्यासितत्वाद्वस्तुन ,असि छिनत्त्यसिना छिनत्तीति दर्शनादिति । 'एए-हिं पगर्हि तस्स उवगत'ति ( २२६–३ ), तस्य ब्राह्मणस्यैतै पूर्वोक्तपदैरुपगत–परिणतमिद, यदुत–सर्वभाववेत्ताऽसौ ततो युक्त देवै पूजनमस्येति । 'वेयावत्त' ( २२७–१० ) चैत्यमिति, कोऽर्थ इत्याह—'अव्यक्त'मिति जीर्ण्ण पतितमा-यमनिर्द्धारितदेवताविशेषाश्रयभूतमित्यर्थ ।उपसर्गोचिचरण समासमिति। 'दश द्वे च सङ्ख्यया द्वादशे'ति (२२८–१५), अत्र वारा इति शेषो द्रष्टव्य इति । 'क्षीरादिद्रवाहारभोजनकाललभ्यव्यतिरेकेणे'ति ( २२८–२३ ), क्षीरादिश्चासौ द्रवाहारश्च तस्य भोजनकाल तत्र लभ्य–प्राप्त गृहीत यत्पानक तद्व्यतिरेकेण नान्यदा पानकभोग कृतवानित्यर्थ , यदा लेप-कृदाहारसंसृष्ट करादिकमभूत्तदा पानक जग्राह नान्यदेतिभाव , अन्ये त्वाहु –क्षीरादिद्रवाहारश्चासौ भोजनकाललभ्यश्च तद्व्यतिरेकेणेति, इदमुक्त भवति–छद्मस्थकाले यदि पर द्रवाहार एव क्षीरादिक पानकस्थाने अभून्नान्यत्पानक गृहीतवान्, तत्त्व बहुश्रुता विदन्तीति । 'वक्ष्यमाणवैनयिकधर्ममूल'मिति ( २३५–५ ), वक्ष्यमाणो–योऽस्यामेव पर्षदि मया वक्ष्यते वैनयिको–विनयमूलो धर्मस्तस्य मूल–कारण, मयि हि विनय कुर्वति मदुक्त विनयमूल धर्म्म लोकोऽपि प्रतिपत्स्यत इति भाव । 'अन्ये त्वेकगाथयैवानये'त्यादि ( २३५–१२ ), प्रकृत "केवइयत्ति" द्वार, तस्य च किल ते कियतो भूभागादपूर्वे समवसरणे अदृष्टपूर्व वा साधुना आगन्तव्यमित्यमुमर्थ व्याचक्षते, न पुन कियन्ति सामायिकानि मनुष्यादय प्रतिपद्यन्ते इत्यादिकमिति, ततश्च 'सव्व च देसविरइ'इत्यादिगाथाना समवसरणद्वारेऽन्तर्भाव कृत्वा प्रकृत 'केवइय'त्ति द्वितीय-

द्वाराभिधायकत्वेन प्रस्तुतगाथामेव व्याचक्षते, व्युत्पन्ना चेय व्यारया, 'केवइय त्ति शब्दस्य प्रस्तुतार्थध्वनकत्वादित्यादि-कारणादिति । 'अपिशब्दादुपशमेऽपी'ति ( २३६–९ ), उपशम प्रकृतीना यद्यपि तस्य न सम्भवति तथापि कर्म्मणा तीव्रोदयनिरोधमात्रमुपशमत्वेन विवक्ष्यत इति । 'अकालहरण'मिति ( २३७–२ ), श्रोतु पृच्छाकालस्यानतिपातो, बहूना कथने हि तत्कालातिपात एव स्यादिति । 'साधारणासपत्नाया'मिति ( २३७–१४ ) ग्राहकगिरो विशेषण । इति समवसरणवक्तव्यता ।

इदानी गणधरवक्तव्यता—'अन्नोऽवि जाणइ मए ठियम्मी' ( अह एइ अहम्माणी अमरिसिओ इन्दभूइत्ति ( वृ० ) अत्र तु ज्ञायते अन्नोऽवि जाणइ मए ठियमि सो इन्दभूइत्ती २४१ ) त्यादिगाथादल, मय्यप्यत्र स्थितेऽन्योऽपि कश्चित्किञ्चिज्जानातीति कुतस्त्यमेतत् ?, न सम्भवतीत्यर्थ । 'सत्सम्प्रयोगे'इत्यादि ( २४२–१६ ), सता–विद्यमानेन घटा-दिना सम्प्रयोगे–सम्बन्धे केषाम् ? इन्द्रियाणा पुरुषस्य–जीवस्य यद्बुद्धिजन्म भवति तत्प्रत्यक्षमिति । 'न च यात्र्य घटस-त्तायामपि नवते'त्यादि ( २४३–४ ) अयमत्र भावार्थ –चार्वाक किलाह–ननु घटे विद्यमानेऽपि नवता निवर्त्तते पुराणा-वस्थायाम्, अथ च तथापि नवता घटस्य धर्मो भवति, एव यद्यपि शरीरसद्भावे चैतन्य निवर्त्तते तथापि घटनवतावद्भूत धर्म्मतैव चेतन्यस्येति,तदेतत्न वक्तव्य,कुत इत्याह—'घटस्य द्रव्यपर्याये'त्यादि(२४३–५),सुगम 'प्रदीपे'त्यादि(२४३–१५) प्रदीपेन बहिर्भागरूपप्रदेशेनोद्योतितो न सर्वात्मना यो घटस्तद्वद्देशत प्रत्यक्षो जीव इति। ननु च देह एव ग्रहो न तद्व्यति-रिक्त, तस्य चाव्यतिरिक्तस्य हास्यादिलिङ्गेन सहाविनाभावोऽध्यक्षसिद्ध एवेत्याशङ्क्याह—'न च देह एव मह'इति-

(२४३-१८), यदि हि देह एव ग्रह स्यात्तदा देहत्वाविशेषात्सर्वदेहानामप्यव्यतिरिक्तहास्यादिप्रसङ्ग इति भाव इति प्रथमो गणधर । इदानीं द्वितीय –'छलादिने'ति (२४३–२७), आदिशब्दाद् वितण्डाजात्यादिपरिग्रह , 'अकारणताविशेषाभ्युपगमे चे'त्यादि ( २४५–२ ), एतदुक्त भवति–यद्यतिप्रसङ्गनिवृत्त्यर्थमकारणतापि विशिष्टा काचिदभ्युपगम्यते तदा तद्भावप्रसङ्ग –कर्मभावप्रसङ्ग , सञ्ज्ञान्तरेण तस्यैवोक्तत्वादित्यभिप्राय इति द्वितीय इति । तृतीय सुगम । इदानीं चतुर्थवक्तव्यता–'समूहिभ्यस्तत्त्वान्यत्वाभ्या'मित्यादि ( २४६–२७ ), समूह समुदाय इत्यनर्थान्तर, समूहिन समुदायिन इत्यपि च, ततश्चाय समुदाय समुदायिभ्यो भिन्नो वा स्यादभिन्नो वा ?, यद्याद्य पक्षस्तर्ह्यसौ समुदायिषु वर्त्तमान किं देशेन वर्त्तते सर्वात्मना वेति वक्तव्य, यदि देशेनेति पक्षस्तर्हि तेष्वपि देशेष्वनेन वर्त्तितव्य, ततस्तत्रापि वर्त्तमान किं देशेन वर्त्तते सामस्त्येन वेत्यादि पुनस्तदेवावर्त्तत इत्यनवस्था, अथ सर्वात्मनेति पक्षस्तर्ह्येकस्मिन्नेव समुदायिनि सामस्त्येन वृत्तत्वाद्द्वितीयादिसमुदायिन समुदायशून्यत्वमासादयेयु , अथ मा भूदेष दोष इत्यभिन्नोऽसौ अभ्युपगम्यते तर्हि समुदायिन एव ते न पुनस्तदतिरिक्त समुदायो वास्तव कश्चनापि विद्यत इति तत्त्वान्यत्वाभ्या–भेदाभेदाभ्यामनिर्वचनीय –अवाच्य इत्यर्थ , 'तदभावे खल्वेकपरमाणुव्यतिरेकेणे'त्यादि ( २४७–४ ), 'तदभावे' इति तुल्यत्वाभावे, कथ शेषपरमाणूनामभाव इति चेद् उच्यते, ते हि विवक्षितपरमाणुना सार्द्ध परमाणुत्वेन तुल्या न वेति वाच्य, यदि तुल्यास्तर्हि तुल्यरूपसिद्धि , अथ न तुल्या इति पक्षस्तर्हि यथा परमाणुत्वेनातुल्यस्य व्योमादे परमाणुत्वाभावस्तथा विवक्षितैकपरमाणुव्यतिरेकेण शेषपरमाणुष्वपि तत्त्वाभाव स्यात्, तत्रैतत् स्यात्–तदन्यव्यावृत्तिमात्र तुल्यत्व, तच्च परिक-

द्वाराभिधायकत्वेन प्रस्तुतगाथामेव व्याचक्षते, व्युत्पन्ना चेय व्याख्या, 'केवइय'त्ति शब्दस्य प्रस्तुतार्थध्वनकत्वादित्यादिकारणादिति। 'अपिशब्दादुपशमेऽपी'ति ( २३६–९ ), उपशम प्रकृतीना यद्यपि तस्य न सम्भवति तथापि कर्म्मणा तीव्रोदयनिरोधमात्रमुपशमत्वेन विवक्ष्यत इति। 'अकालहरण'मिति ( २३७–२ ), श्रोतु पृच्छाकालस्यानतिपातो, यह्ना कथने हि तत्कालातिपात एव स्यादिति। 'साधारणासपन्नाया'मिति ( २३७–१४ ) ग्राहकगिरो विशेषण। इति समवसरणवक्तव्यता।

इदानीं गणधरवक्तव्यता—'अन्नोऽवि जाणइ मए ठियम्मी' ( अह एइ अहम्माणी अमरिसिओ इन्दभूइत्ति ( मू० ) अत्र तु ज्ञायते अन्नोऽवि जाणइ मए ठियमि सो इन्दभूइत्ती २४१ ) त्यादिगाथादल, मय्यप्यत्र स्थितेऽन्योऽपि कश्चित्किञ्चिज्जानातीति कुतस्त्यमेतत् ?, न सम्भवतीत्यर्थ। 'सत्सम्प्रयोगे'इत्यादि ( २४२–१६ ), सता–विद्यमानेन घटादिना सम्प्रयोगे–सम्बन्धे केषाम् ? इन्द्रियाणा पुरुषस्य–जीवस्य यद्बुद्धिजन्म भवति तत्प्रत्यक्षमिति। 'न च वाच्य घटसत्तायामपि नवते'त्यादि ( २४३–४ ) अयमत्र भावार्थ –चार्वाक किलाह–ननु घटे विद्यमानेऽपि नवता निवर्त्तते पुराणावस्थायाम्, अथ च तथापि नवता घटस्य धर्मा भवति, एव यद्यपि शरीरसद्भावे चैतन्य निवर्त्तते तथापि घटनवतावद्भूतधर्म्मतैव चैतन्यस्येति,तदेतन्न वक्तव्य,कुत इत्याह—'घटस्य द्रव्यपर्याये'त्यादि(२४३–५),सुगम 'प्रदीपे'त्यादि(२४३–१५) प्रदीपेन बहिर्भागरूपप्रदेशेनोद्योतितो न सर्वात्मना यो घटस्तद्वदेशत प्रत्यक्षो जीव इति। ननु च देह एव ग्रहो न तद्व्यतिरिक्त, तस्य चाव्यतिरिक्तस्य हास्यादिलिङ्गेन सहाविनाभावोऽध्यक्षसिद्ध एवेत्याशङ्क्याह—'न च देह एव ग्रह'इति-

वर्त्तन्त इति भवदभिप्रेतापि तुल्यबुद्धिर्निमित्तरहितैवेत्याशङ्क्याह—'न चेयमनिमित्ते'त्यादि ( २४७-८ ), एतदपि कुत
इत्याह—'देशे'त्यादि, यदि हि निर्निमित्ता एवार्थबुद्धयो भवेयुस्तर्हि देशकालाद्यनियमेन सर्वत्रैवोत्पद्येरन्नियामकाभा-
वादिति भावार्थ । ननु च स्वप्नबुद्धयोऽपि नियतदेशादिविशेषितमर्थं गृह्णन्ति न च सत्या एवेत्याह—'न च स्वप्ने'त्यादि
( २४७-९ ), भावना सुगमैव, 'अणुभूय' गाहा ( २४७-९ ), अनुभूत—जलावगाहनादि दृष्टम्—अङ्गनादि चिन्तित—
क्रयविक्रयादि श्रुत—देवलोकादि प्रकृतिविकारो—वातपित्तक्षोभादिर्देवता—प्रतीता अनूप—सजलप्रदेश , तत्र हि सुप्त
प्राय किल प्रचुरस्वप्नदर्शी भवति, एतानि सर्वाण्यपि स्वप्नदर्शननिमित्तानि भवन्ति, तथा शुभस्वप्नदर्शने पुण्य तु स्वप्न
दर्शने पाप च निमित्तीभवति नाभाव—अवस्तुरूप । किञ्च—यदि घटादयोऽर्था सत्यतया नाभ्युपगम्यन्ते तर्हि नेयं
भनतो व्यवस्था युज्यते—अय स्वप्नोऽय चास्वप्न इद गन्धर्वनगर व्यलीकमिद तु वस्तु सन्नगर पाटलीपुत्रादीति, अमुमे-
वार्थमाह—'न च भूते'त्यादि ( २४७-१० ), एव तुल्यबुद्धे सनिमित्तत्व व्यवस्थाप्य पुनरपि ज्ञानवादिमतमाशङ्क्याह—
'न चालये'त्यादि ( २४७-११ ), आलय आश्रय आधार इत्यनर्थान्तर, तद्भूत विज्ञान आलयविज्ञान घटाद्यर्थग्राहका-
नकज्ञानजनकशक्त्याधारमनादिप्रवाहवाहिकया प्रवृत्त मनस्काराख्य चैतन्यमात्रमित्यर्थ , तद्गता या शक्तिस्तस्यास्तथावि-
धवासनात समुद्भूतो य परिपाकस्तत्समनन्तर यदुत्पन्न तुल्योऽयमिति विकल्पजननसामर्थ्यमालयविज्ञानस्य तदस्यास्तुल्य-
बुद्धेर्निमित्त न बाह्यार्थगत तुल्यत्वमिति न वाच्य, कुत इत्याह—'स्वलक्षणे'त्यादि ( २४७-१२ ), आलयविज्ञानगत
हि सामर्थ्य सकलसजातीयविजातीयव्यावृत्त स्वलक्षणरूप,तच्च कथ तुल्यबुद्धौ विपरिवर्त्तमानस्य विजातीयव्यावृत्तिमात्ररूपतु

ल्पितमेवेत्याह—'न च तदन्ये'त्यादि ( २४७–४ ), एतदपि कुत इत्याह—'स्वरूपे'त्यादि ( २४७–५ ), परमाणूना हि किञ्चित्स्वकीय रूपमभ्युपगन्तव्य, अन्यथा तदन्यव्यावृत्तिमात्ररूपतया खपुष्पत्वप्रसङ्ग , स्यादेतद्–भवतु नाम परमाणूना स्वरूपं, तथापि न भवत्समीहिततुल्यत्वसिद्धि , तस्यैव सजातीयेतरव्यावृत्तस्य तदन्यव्यावृत्तिरूपत्वादित्याह—'न च तद्रूपमेवे ति ( २४७–६ ), किमितीत्याह—'तस्ये'त्यादि ( २४७–७ ), तस्य अणोस्तेभ्य –सजातीयेतरपरमाणुगगनादिभ्य , एततुक्त भवति–येन स्वभावेनासौ व्योमादिभ्यो व्यावृत्तो न तेनैव शेषाणुभ्य इति स्वभावद्वयमस्याभ्युपगन्तव्य, कस्मादित्याह—'स्वभावे'त्यादि ( २४७–७ ), अयमभिप्रायो–यदि हि विवक्षितस्याणो स्वभावद्वय स्यात्तर्हि तदाश्रित्यायमस्य सजातीय परमाणुर्विजातीयश्च गगनादिरिति व्यवस्थाप्येत, नान्यथा, निबन्धनाभावात्, यदि नाम स्वभावद्वय तस्याभ्युपगत तथापि तस्य सजातीयव्यावृत्तिनिबन्धनस्वभावेन सर्वथैव सजातीयेभ्यो व्यावृत्तत्वान्न भवदभिमततुल्यत्वसिद्धिरित्याह—'सजातीयैकान्ते'त्यादि ( २४७–७ ), इदमत्र हृदय–यथा तस्य विजातीयेभ्य –अनणुस्वभावेभ्य व्योमक्षणिकादिभ्योऽनणुत्वेन व्यावृत्तौ अनणुत्वस्याभाव , षष्ठ्यन्तस्य वति , तथा सजातीयेभ्य –परमाणुभ्य एकान्तेनाणुत्वेनापि व्यावृत्ताविष्यमाणायामणुत्वस्याप्यभाव स्यात्, भावे चाणुत्वस्यैव तुल्यरूपतेति सिद्ध न साध्य, ननु चार्थाना तुल्यत्वातुल्यत्वचिन्ता युज्यते यद्यर्था एव तावत्सत्यतया सिद्धा भवेयु , तच्च नास्ति, तत्प्रतिभासस्य निर्निमित्ततया भ्रान्तत्वात्, तथाहि–स्तम्भादीना यावद्रूपमस्ति तस्य परभाग कल्पनीय , स चार्वाग्भागेन तिरोहितत्वान्न दृश्यते, सर्वारातीयभागस्त्वेकैकपरमाणुप्रतररूप , स च नार्वाग्दर्शिना दृग्पथमवतरतीत्यनादिविद्यातो निर्निमित्ता एवार्थावभासास्तथा तथा विपरि-

स्यादिति न प्रति-ऽत्यन्तव्यतिरिक्ताकारपरिच्छेदे तस्य परिच्छेदो युक्त, अन्यथा घटपरिच्छित्तौ पटस्यापि परिच्छित्ति नियतविषयव्यवस्था, अथाभिन्नो नीलविषयान्नीलाकारोऽभ्युपगम्यते तर्हि विषयाकारस्य ज्ञानात्मनि सङ्क्रान्तत्वाद्विषयस्य निराकारतैव स्यात्, किञ्च–विषयादभिन्नत्वादाकारस्य तत्सङ्क्रान्तौ विषयस्यापि ज्ञानात्मनि सङ्क्रान्तिरभ्युपेया, सा च न युक्ता, निशितशस्त्रदहननीरनिवहाद्यवलोकने हृदयपाटनदहनप्लावनप्रसक्ते, तदेव विषयाद्भिन्नस्याभिन्नस्य वा तदाकारस्य ज्ञानात्मनि प्रतिभासाभावात् तद्द्वारेण ग्राह्यत्वाभिमतार्थानामप्यभाव इति ज्ञानमेवैक वस्तु सन्नार्थ इत्येव विह्वलमारसन्त ज्ञानाद्वैतवादिनमाशङ्क्याह—'न च विषये'त्यादि ( २४७–१८ ), विषयो–नीलादिस्तद्बलेन य सञ्जात संवेदनस्याकारो नीलादि तस्य पूर्वोक्तनीत्या विषयाद्भेदाभेदविकल्पमुखेन अनुपपत्ति –अघटना न भाव्येत्यक्षरघटना, भावार्थस्तु पात नावसरे कथित एव, क्वचिद् 'विषयबलोपसजातसंवेदनाकारस्य ज्ञानस्ये'ति पाठ, स तु नातीव श्लिष्टतया बुध्यते, कथञ्चित्स्वबुद्ध्या भावनीयो वा, कस्मात्संवेदनेऽर्थाकारस्यानुपपत्तिर्न भाव्येत्याह–'विशिष्टे'त्यादि ( २४७–१८ ), अयम भिप्रायो–नास्माभिरर्थाकारसङ्क्रान्तिर्ज्ञानेऽभ्युपगम्यते येन भेदाभेदपरिकल्पनयाऽऽत्मान परिक्लेशयति भवान्, किन्तु विशि-ष्टपरिणामो योऽर्थ प्रतिविशिष्टदेशाद्यवस्थानेन सम्पादितविज्ञानजननस्वभाव इति भाव, तत्सन्निधावात्मनो–जीवस्य कालश्च क्षयोपशमश्च आदिशब्दात्सोपयोगत्वादिपरिग्रह, तत्सव्यपेक्षस्य नीलादिप्रतिभास ज्ञानमुत्पद्यते, तथाहि–पुरुषादि-मुखसङ्क्रान्तिमन्तरेणापि दर्पणादौ कश्चित्प्रतिबिम्बोदयो दृश्यते, न च तत्र भेदाभेदकल्पना युक्तिमती, तथाविधपुरुषमु-खादिसामग्र्यास्तथाभूतसप्रतिबिम्बदर्पणादिवस्तूत्पत्तिदर्शनात्, न हि दृष्टेऽनुपपन्न नाम, यथा वा सूर्योपलरविकिरणगोम-

ल्यत्वस्य निमित्तीभवति ?,न ह्यात्मना अन्यथाभूत वस्तु अन्यथाभूत विज्ञान जनयति,नीलवस्तुनि पीतज्ञानप्रसङ्गेरिति भावार्थ, नाप्यत्यन्तसाहसपरंरक्षिणी निमील्येदमभिधानीय–आलयज्ञान स्वलक्षणादन्यत्किञ्चिदुत्पत्स्यते ततोऽपि पारम्पर्येण तुल्य बुद्धिगत तुल्यत्व सामान्यमिति, कुत इत्याह—'स्वलक्षणे त्यादि ( २४७–१२ ), सुगम, किञ्च–य प्रागालयज्ञानस्य शक्तिपरिपाकोऽभिहित सोऽपि बाह्यनीलाद्यर्थमन्तरेण नोपपद्यते, निबन्धनाभावात्, अन्यथा सर्वदा शक्तिपरिपाकप्रस ङ्गात्, एतदेवाह—'बाह्ये त्यादि ( २४७–१३ ),किञ्च–आलयज्ञानस्य या पूर्वं शक्तयोऽभिहिता ता अपि भेदाभेदविक ल्प्यमाना न सत्तामनुबध्नन्ति, एतदाह—'किञ्चालये'त्यादि ( २४७–१४ ), सर्वकरे शक्तीना यथा पीतादिप्रतिभासहे तुता न भवति तथा प्रयोगेण दर्शयति—'नीलविज्ञाने'त्यादि, 'न तद्धर्म'ति ( २४७–१५ ), न नीलविज्ञानजननधर्म्मे त्यर्थ, शक्त्यन्तरस्वात्मवदिति, यथा शक्त्यन्तर–पीतादिविज्ञानजननशक्तिलक्षण नीलविज्ञान न जनयति तथा नीलवि ज्ञानजननशक्तिरपि न तज्जनयेत्, पीतादिशक्त्यन्तररूपत्वात्तस्या, अथ पीतादिविज्ञानशक्त्यो नीलविज्ञानशक्तिरूपा स्तर्हि विपर्यय स्वबुद्ध्या भावनीय । 'बाह्योऽर्थ केन वार्यत'इति ( २४७–१७ ), अयमभिप्रायो–यद्यालयविज्ञानाद्व्य तिरिक्ता वस्तुसत्य शक्तयोऽभ्युपगम्यन्ते तर्हि गतो ज्ञानाद्वैतवाद इत्यर्था अपि किनाभ्युपेयन्त इति, 'एव मित्याद्युपस हार । ननु च 'तदाभासज्ञानोत्पत्ते'रित्यत्र तुल्यरूपपरमाण्वाकारज्ञानोत्पत्ते परमाणूना तुल्यरूपग्रहणमित्ययमर्थोऽभि प्रेत, स च न युक्त, अर्थाकारस्यैव विज्ञाने विकल्पाभ्यामनुपपत्ते, तथाहि–नीले वस्तुनि पुरो दृश्यमाने योऽय ज्ञाने नीलाकारो भवद्भिर्गीयते स किं तस्मान्नीलवस्तुनो भिन्नोऽभिन्नो वेति वक्तव्य, यदि भिन्नस्तर्हि न नीलवस्तुपरिच्छेदो, न हि ततो-

अय घटादिरय च शरावादि , निबन्धनाभावादित्याशङ्क्याह—'न च परमाणूना'मित्यादि ( २४७–२१ ), पृथुबुध्नोदराकारादिपरिणामवन्तो घटादय उत्तानच्छत्राकारादिपरिणामवन्तश्च शरावादय इत्यादिपरिणामवैचित्र्यान्निबन्धनाभावादित्यसिद्धो हेतुरित्यभिप्राय , ननु च मया भूतानामभाव आशङ्कित , साधिता च परमाणुसत्तेत्यसम्बद्धमेतदित्याशङ्क्याह—'न च परमाणिव'त्यादि ( २४७–२२ ), नन्वयुक्तमेतद्–आकाशस्यानणुरूपत्वात्, सत्य युक्तमुक्त, केवल पृथिव्यप्तेजोवायूना तद्रूपत्वाद्बाहुल्यादित्थमुक्त, आकाश तु विद्यते नभ असमस्तपदवाच्यत्वाद् घटवदित्यादियुक्तिभ्य स्वयमभ्यूह्यमित्यल प्रसङ्गेन समासश्चतुर्थगणधर । पञ्चम सुगम । षष्ठ प्रारभ्यते–पूर्वं निर्हेतुकत्वादात्मन प्रसूतिरेव नोपपद्यत इत्युक्तं, इदानीं पूर्वस्मिन्नेव पक्षे प्रसूतिमभ्युपगम्यापि दूषणमाह—'न चादिमत्यपी'त्यादि ( २४९–१६ ), क्वचिदनादिमत्यपीति पाठ , स चायुक्त एव, तत्पक्षस्यानन्तरमेव वक्ष्यमाणत्वादिति । अनादित्वाज्जीवकर्म्मसयोगस्य वियोगाभावान्मोक्षाभाव प्रतिपाद्य प्रकारान्तरेणाह—'देहकर्मसन्ताने'त्यादि ( २४९–१९ ), सन्तानश्चाय देहकर्म्मणोरित्थ द्रष्टव्य –शरीर कर्म जनयति, कर्मापि शरीर, तदपि पुन कर्म, कर्म्मापि पुन शरीरमिति, तदेवमत्र जन्यजनकभावेन व्यवस्थितेर्देहकर्म्मसन्तानस्य व्यवच्छेदाभावान्मोक्षाभाव पूर्वमत्र च जीवकर्म्मणोर्वियोगाभावादित्यय विशेष , अत्र च परिहार –सयोगवियोगाभावपक्षे यत काञ्चनोपलयोरित्यादिक वक्ष्यति, द्वितीयपक्षे तु स्वयमभ्यूह्य, यथा नायमेकान्तोऽनादेर्जन्यजनकत्वेनावस्थितस्य सन्तानस्यान्तो न भवति, यतोऽनादिकालाज्जन्यजनकभावेन व्यवस्थितोऽपि बीजाङ्कुरादि सन्तान सान्तो दृश्यते, कस्यचिद्बीजस्य वह्न्यादिसामग्रीतो विनाशादङ्कुरस्यानुत्पत्तेरिति, ननु च जीवकर्म्मणो सयोग किं काञ्चनोपल-

यादिसामग्र्या अनलप्रसूति , न च तत्र सामग्र्यन्तर्गत किञ्चित्तत्र सङ्क्रामति, तथेहापि रूपालोकमनस्कारादिसामग्र्या नीलादिप्रतिभासपरिणामस्वरूपमात्मनो ज्ञानमुत्पद्यते का तत्र भेदाभेदपरिकल्पना ?, प्रतीतिबाधितत्वेन तस्या अनादेयत्वात्, तदुक्त कैश्चित्सौगतविशेषैरपि-"रूपालोकमनस्कारचक्षुर्भ्यं सम्प्रवर्त्तते । विज्ञान मणिसूर्य्यांशुगोशकृद्भ्य इवानल ॥ १ ॥ इति" तदेव विशिष्टरूपादिसामग्र्या नीलादिविषयग्रहणपरिणामस्यैव ज्ञानस्याभ्युपगमान्नार्थाकारसङ्क्रान्तिपक्षोक्तो दोष, तदभावाच्च नार्थाभाव इति स्थित, तद्दर्शनान्यथानुपपत्तेरेव स्वाभ्युपगमं ग्राहयन्नाह-'इत्थ चैतदि'त्यादि ( २४७-१९ ), प्रागुपन्यस्तविकल्पयुगल भेदाभेदलक्षण, इदमत्र हृदय-अर्थाभावेऽप्यनाद्यविद्यावशतस्तावद्भवताऽपि नीलपीतादिबुद्धय क्षणिकस्वरूपा इष्यन्त एव, तत्र चोत्तरनीलबुद्धिक्षणो यो नीलाकार प्रतिभाति स किं पूर्वनीलबुद्धिक्षणाद्भिन्नोऽभिन्नो वा ?, यदि भिन्न कथमुत्तरसवेदनक्षणे प्रतिभासते, प्रतिभासे वा पीताकारस्याप्युत्तरबुद्धिक्षणे प्रतिभास स्यात्, पूर्वनीलबुद्धिक्षणाद्द्वयोरपि भेदाविशेषात्, अथाभिन्न इति पक्षस्तर्हि न जन्यजनकभाव , उत्तरनीलसवेदनाकारस्य पूर्वस्मादभिन्नत्वात्, भेदे च जन्यजनकभावाभ्युपगमादित्युत्तरनीलसवेदनोत्पत्त्यभावादेकमेव प्रथमनीलसवेदन स्यात्, अथ प्राक्तननीलसवित्तेस्तथाभूतैवोत्तरनीलसवित्ति प्रादुर्भवति किं तत्र भेदाभेदचिन्तया ?, हन्त तर्हि स एव सुहृद्भूतोऽस्मदभ्युपगमस्तथापि शरणं, वयमपि ह्येवमेव ब्रूम -तथाविधनीलविषयादिसामग्र्यास्तथाभूतमेव नीलप्रतिभासपरिणाम ज्ञानमुत्पद्यते किमिह भेदाभेदचिन्तयेति इत्येवमादि सुगम । नन्वेतावता ग्रन्थेनेदमुक्त-एकैक परमाणुर्न गृह्यते, बहुषु तु परमाणुषु समुदितेषु तत्तुल्यरूप चक्षुर्ज्ञाने प्रतिभासत इति तदेतन्मन्यामहे, केवल परमाणूना बहुत्वेऽपि तुल्यबुद्ध्यभ्युपगमेऽय विशेषो न स्याद्

अय घटादिरय च शरावादि , निवन्धनाभावादित्याशङ्क्याह—'न च परमाणूना'मित्यादि ( २४७–२१ ), पृथुबुध्नोदराकारादिपरिणामवन्तो घटादय उत्तानच्छत्राकारादिपरिणामवन्तश्च शरावादय इत्यादिपरिणामवैचित्र्यान्निवन्धनाभावादित्यसिद्धो हेतुरित्यभिप्राय , ननु च मया भूतानामभाव आशङ्कित , साधिता च परमाणुसत्तेत्यसम्बद्धमेतदित्याशङ्क्याह—'न च परमाणिव'त्यादि ( २४७–२२ ), नन्वयुक्तमेतद्–आकाशस्यानणुरूपत्वात्, सत्य युक्तमुक्त, केवल पृथिव्यप्तेजोवायूना तद्रूपत्वाद्बाहुल्यादित्थमुक्त, आकाश तु विद्यते नभ असमस्तपदवाच्यत्वाद् घटवदित्यादियुक्तिभ्य स्वयमभ्यूह्यमित्यल प्रसङ्गेन समाप्तश्चतुर्थगणधर । पञ्चम सुगम । षष्ठ प्रारभ्यते–पूर्व निर्हेतुकत्वादात्मन प्रसूतिरेव नोपपद्यत इत्युक्त, इदानीं पूर्वस्मिन्नेव पक्षे प्रसूतिमभ्युपगम्यापि दूषणमाह—'न चादिमत्यपी'त्यादि ( २४९–१६ ), क्वचिदनादिमत्यपीति पाठ , स चायुक्त एव, तत्पक्षस्यानन्तरमेव वक्ष्यमाणत्वादिति । अनादित्वाज्जीवकर्म्मसयोगस्य वियोगाभावान्मोक्षाभाव प्रतिपाद्य प्रकारान्तरेणाह—'देहकर्मसन्ताने'त्यादि ( २४९–१९ ), सन्तानश्चाय देहकर्म्मणोरित्थ द्रष्टव्य –शरीर कर्म जनयति, कर्मापि शरीर, तदपि पुन कर्म, कर्म्मापि पुन शरीरमिति, तदेवमत्र जन्यजनकभावेन व्यवस्थितेर्देहकर्म्मसन्तानस्य व्यवच्छेदाभावान्मोक्षाभाव पूर्वमत्र च जीवकर्म्मणोर्वियोगाभावादित्यय विशेष , अत्र च परिहार –सयोगवियोगाभावपक्षे यत काञ्चनोपलयोरित्यादिक वक्ष्यति, द्वितीयपक्षे तु स्वयमभ्यूह्य, यथा नायमेकान्तोऽनादेर्जन्यजनकत्वेनावस्थितस्य सन्तानस्यान्तो न भवति, यतोऽनादिकालाज्जन्यजनकभावेन व्यवस्थितोऽपि बीजाङ्कुरादि सन्तान सान्तो दृश्यते, कस्यचिद्बीजस्य वह्न्यादिसामग्रीतो विनाशादङ्कुरस्यानुत्पत्तेरिति, ननु च जीवकर्म्मणो सयोग कि काञ्चनोपल-

वदुत जीवाकाशप्रदेशवद् ?, यद्याद्य पक्षस्तर्हि भवद्दर्शितनीत्यैव युज्यते वियोगो, द्वितीयपक्षे तु न युज्यते, सत्य, द्विविधोऽपीहाश्रीयते, किन्तु प्रथमो भव्याना द्वितीयस्त्वभव्यानामिति, ननु यदनादिस्वभाव तन्न क्रियते यथा व्योम, तथास्वभाव चाभ्युपगम्यते कर्म, तस्मान्न क्रियत इत्याशङ्क्याह—'न चानादित्वादि'त्यादि, (२४९–२४), उपपत्तिमाह—'यत इत्यादि (२४९–२५), यदि वर्त्तमानतयोपात्त कृतमभिधीयते तर्हि अनादिता कथमित्याशङ्क्य पुनरपि वर्त्तमानत्वम् अनादित्व च यथा भवति तथा सदृष्टान्त दर्शयति—'सर्व चे'त्यादि (२४९–२७), एतदुक्त भवति–कालन्तरकर्मण प्रवाहापेक्षया अनादित्व व्यक्त्यपेक्षया तु सादित्वमिति, ननु चेत्थ कर्मवियोग प्राप्यानन्ता सिद्धिक्षेत्र जग्मुर्गमिष्यन्ति च, तच्च पञ्चचत्वारिंशद्योजनलक्षमानमेव, ततस्तावता कथ तत्र स्थितिरित्याशङ्क्याह—'न च परिमिते'त्यादि, दृष्टान्तमाह—'प्रतिद्रव्य मित्यादि (२५०–२), एकैकस्मिन्नपि हि परमाण्वादिके द्रव्ये येषा ज्ञान विषयमासादयति तन्न तन अनन्ताना सिद्धकेवलिनामनन्तानि ज्ञानदर्शनानि पतन्ति, न च तत्र कश्चिरसम्बाध, अमूर्त्तत्वाज्ज्ञानस्य, तद्वदिहापीति भाव, दृष्टान्तान्तरमाह—'नर्त्तकी'त्यादि (२५०–३), नयनाना विज्ञानानि २ नर्त्तक्या तत्सम्पातस्तद्वद्, रङ्गभूमौ हि लास्यप्रवृत्तवराङ्गनातनौ केपाश्चिन्मतेन कौतुकाक्षिप्तदिदृक्षूणा नायना रश्मयो निर्गत्य पतन्ति, न च तत्र योषितो काचिद्बाधा नापि रश्मीना परस्पर तद्वदिहापीति भाव पञ्च समाप्त ॥ सप्तम आरभ्यते–'स एप वज्रायुधी'त्यादि (२५०–१३), वज्र एवायुध तद्विद्यते यस्य स तथा 'अञ्जसा' प्रगुणेन न्यायेन इद देवसत्ताप्रतिपादक, अनन्तर च 'तथा जपामे'त्यादि (२५०–१४), ज्योतिप पर्यायमाह—'स्वर्ग मिति,

येऽमरणधर्माणो मुक्ता न बभूवुस्ते स्वर्गमगमन्निति भाव , गत्वाऽपि स्वर्गं किं ते प्रापुरित्याह—'अविद्राम देवानि'ति, विदेर्लाभार्थत्वाच्छान्दसत्वाच्च देवानिति देवत्वं लब्धवन्त इत्यर्थ , न केवल मम प्रत्यक्षत्वात्सन्ति देवा , किन्तु भवतोऽपि प्रत्यक्षत्वादिति योज्य, तत्प्रत्यक्षत्वं च देवाना तदा तत्रेवागतत्वात्, आगमाच्च 'स एष यज्ञायुधी'त्यादिलक्षणात्सन्तीत्यनुवर्त्तत, ननु 'को जानाति मायोपमानि' त्यादिलक्षणादागमान्नास्तित्वमप्यवसीयत इत्याह—'सर्वथे'त्यादि, 'अनधीनमनुजकार्यत्वादि'ति ( २५०–२७ ), न हि मनुष्याणा सम्बन्धि किञ्चित्कार्यं देवानामायत्त, तस्य मनुष्यनिर्वर्त्यत्वात्, यदि वा न देवकार्यं किञ्चिन्मनुष्याधीन येन तन्निष्पत्तये ते इहागच्छेयुरिति भाव , एतैश्च सर्वरेव हेतुभि 'संकतदिव्वपेमा विसयपसत्ता समत्तकत्तया । अणहीणमणुयकज्जा नरभवमसुभ न इति सुरा ॥ १ ॥' एषा भाष्यगाथा विवृता भवति, शेष सुगम । सप्तम समास ॥ अष्टम प्रारभ्यते–अत्र सर्वज्ञाभाववादिमीमासकादिमतमाशङ्क्याह—'न चाशेषे'त्यादि (२५१–१८), उपपत्तिमाह–'यत'इत्यादि, यदि समस्तवस्तुज्ञायकोऽसौ किमिति तन्न पश्यतीत्याह—'ज्ञाने'त्यादि, यद्यावृत्तस्वभावोऽसौ ज्ञस्वरूपत्व तर्हि कथमवसीयते इत्याह—'तत्क्षये'त्यादि ( २५१–१९ ), तस्य–ज्ञानावरणीयस्य क्षयोपशमस्तस्माज्जात , यदि नाम क्षायोपशमिको ज्ञानवृद्धिविशेषस्तथापि कथ तस्य ज्ञस्वरूपत्वमित्याह—'न ह्यय'मित्यादि ( २५१–२० ), तत्स्वाभाव्यमिति–ज्ञस्वाभाव्य, एतदुक्तं भवति–नाय ज्ञानवृद्धिविशेषोऽज्ञस्य युज्यते, दृपदोऽपि तत्प्रसङ्गाद्, इत्येवमित्याद्युपसहार , ननु चात्मा ज्ञस्वभाव , पद्मरागस्तु प्रकाशस्वभाव , ततश्च यथा मलकलङ्कापगमेऽप्रतिस्खलितदीप्तिरपि प्रकाशस्वभावोऽपि न सर्वं प्रकाशयति, किन्तु कियत्पदार्थप्रकाशकत्वेनैव तस्य प्रकाशस्वभावत्व, एवमात्मनोऽपि ज्ञानावरणा-

घपगमेऽपि कियत्पदार्थज्ञायकत्वेन ञ्ज्ञत्वं चरितार्थं, समस्तवस्तुज्ञत्वं तु नोपपद्यते इत्याशङ्क्याह—'न चाप्रतिपद्धे'त्यादि ( २५१–२४ ), उपपत्तिमाह—'तस्य ज्ञस्वभावत्वादि'त्यादि (२५१–२५), ननु पद्मरागपक्षेऽपि शक्यत इदं वक्तुं, न हि प्रकाशकं प्रकाश्ये सति प्रतिबन्धशून्यो न प्रवर्त्तते, न चेत्थं दृश्यते, तस्य कियद्वस्तुप्रकाशनादिति तेनैव व्यभिचार इत्याशङ्क्याह—'न च प्रकाशके'त्यादि, कुत एतदित्याह—'तस्ये'त्यादि ( २५१–२६ ), यावति हि प्रदेशे स्वप्रभाजालं प्रसरति तावद्देशस्थमेव वस्त्वसौ प्रकाशयति, यत्तु अन्यत्र देशादौ कुड्यादितिरोहितं तद्देशादिविप्रकर्षादेव न प्रकाशयितुमलं, आत्मनोऽपि तर्हि देशादयो विप्रकर्षका भविष्यन्तीत्याह—'न चात्मनोऽपी'त्यादि, अत्र युक्तिमाह—'तस्यागमे'त्यादि ( २५१–२७ ), आगमेन चूडामणीकेवल्यादिलक्षणेन ये गम्यन्ते–प्रतिपद्यन्ते आगमगम्यास्तेषु, तानेव दर्शयति–सूक्ष्मा–परमाण्वादयो व्यवहिता–समीपस्था अपि क्षित्याद्यन्तर्गता निधानादयः, विप्रकृष्टास्तु द्विधा–देशतः कालतश्च, तत्र देशतो दूरस्था अमरलोकादयः कालतस्तु चन्द्रोपरागादयस्तेष्वधिगतिः–अवबोधस्तत्सामर्थ्यदर्शनात्त देशादय आत्मनो विप्रकर्षका, एतदेव साधयति—'तथा चे'त्यादि एतदुक्तं भवति–क्षायोपशमिकज्ञानवानपि तावत्सूत्रानुसारतः पर्यालोच्येदं कथयत्येव कश्चित्क्षितितिरोहितं वृक्षमूलं कीलको वाऽत्र विद्यते न त्वया गृहादिसन्निवेशोऽत्र कर्त्तव्यः सशल्यत्वात्, कूपादिखननोद्यतं वा पुरुषं प्रति कथयति–एतावति मानेऽत्रोदकमुन्मीलयिष्यति, तथा सूत्रानुसारत एवामरलोकचन्द्रोपरागादिस्वरूपाधिगतिसामर्थ्यं चोपलभ्यते, न च वक्तव्यम्–आगमस्यैव तत्सामर्थ्यं न जीवस्य, यत आगमोऽपि नाचेतनस्य काष्ठादेर्जडप्रकृतेर्वा पुरुषान्तरस्य तद् ज्ञानं जनयितुमलं, तस्मादागमसव्यपेक्षक्षयोपशमवतो जीवस्यैव देशादिवि-

प्रकृष्टार्थग्रहणसामर्थ्यं, आगमादिस्तु हेतुकलाप सहकारिकारणमेव, अस्य च सर्वस्यापि सर्वज्ञसाधकवचनसदर्भस्य तात्पर्यं प्रयोगद्वारेणोच्यते—यो यावति प्रकाशयितव्ये समर्थ स प्रतिबन्धकाभावे तावत्प्रकाशयत्येव, यथा पद्मरागादिर्मणिविशेष, सकलत्रैलोक्यान्तर्गतवस्तुप्रकाशकश्च पूर्वोक्तनीत्या जीव तस्मात्तत्प्रकाशयत्येव, न च वक्तव्य पूर्वोक्तनीत्या देशादिविप्रकृष्टवृक्षमूलादिकियत्पदार्थज्ञातृत्वेन भवत्वसौ ज्ञस्वभावो, लोकालोकान्तर्गतामूर्त्तेतरस्वरूपाकाशास्तिकायादिपदार्थज्ञातृत्वेन तु कथमात्मनो ज्ञत्वसिद्धिरिति ?, यतस्तेषामप्यदर्शने देशविप्रकर्षो वा निमित्त स्यात्कालविप्रकर्षो वा निमित्त स्यात्स्वभावविप्रकर्षो वा ?, न तावद्देशविप्रकर्षस्तदज्ञातृत्वकारण, देशविप्रकृष्टभौमादिग्रहस्वरूपस्येदानीमपि परिज्ञानात्, तथाहि—सम्भवन्त्येव ज्ञातार इदानीमपि केचन विशिष्टगणका —अद्यामुकग्रहो वक्रस्थ इत्यादि, नापि कालविप्रकर्ष तद्विप्रकृष्टस्यापि चन्द्रोपरागमेघवृष्ट्यादे परिज्ञानात्, नापि स्वभावविप्रकर्ष तद्विप्रकृष्टस्य नरादिशरीरसङ्क्रान्तभूतादेर्विशिष्टनिमित्तबलेनाधुनिकैरपि परिज्ञानात्, तदेव देशविप्रकर्षादिप्रतिबन्धकाभावात्तज्ज्ञातृत्वेनापि तत्त्वमस्यानिवार्यमेव, यत्तु न पश्यति असस्पष्ट वा पश्यति तज्ज्ञानावरणादिप्रतिबन्धकसद्भावात्, सज्ज्ञानध्यानादिकारणकलापात्तु तदपगमेऽनन्तानुत्तरज्ञानवान् सर्वदर्शी भवति, अत्र बहु वक्तव्य तत्तु नोच्यते ग्रन्थविस्तरभयादिति, शेष सुगम, समासोऽष्टम इति ॥

नवम आरभ्यते—तत्र 'स्वभावोपन्यासोऽपि तथैवे'ति ( २५२–१५ ), स्वभावादेव नियतदेशगर्भादिग्रहण भविष्यति किं पुण्यपापाभ्यामित्यादि, यथा द्वितीयगणधरे तथा वाच्यमिति । 'अशेषपरित्यागान्मृतिकल्पो मोक्ष इति' ( २५२–२० ), ननु चापथ्यस्य सर्वस्य परित्यागे पथ्याहारसम्भवात्कथ तस्य मृतिर्येनोच्यते मृतिकल्पो मोक्ष इति, सत्य,

किन्तु पुण्यवत्पथ्याहारस्तस्य मूलतोऽप्यनभ्युपगत एव, यदा त्वपथ्यमपि सर्वं जहाति तदोभयाहाराभावात्कथं न तस्य मृतिरिति । 'अन्योऽन्यानुविद्धस्वरूपकल्प'मिति ( २५२-२१ ), अन्योऽन्यसंकीर्णस्वरूप पञ्चवर्ण यथा मेचकमण्यादिकं वस्तु तत्कल्प-तत्सदृशमित्यर्थ । 'नारकाणामपि ( च वृ० ) पञ्चेन्द्रियत्वानुभवा'दिति ( २५२-२२ ), परिपूर्णपञ्चेन्द्रियत्व हि सुखमिति भाव , 'न च तद्भावो दु खहेतु'रिति (२५३-२), तस्य-पुण्यस्याभावस्तद्भाव , आह-ननु यदि सुखवद्दु खमपि किञ्चिद्वास्तव स्यात्तदा तस्य हेतुरन्विष्येत, यदा तु सुखभाव एव स्वसत्ताविकलो दु ख-सुख निवृत्त मत्तदेव दु खमभिधीयते न पुनस्तदतिरिक्त दु खमस्ति यदर्थं पापलक्षणो हेतुर्मृग्यते तदा किं तद्धेत्वन्वेषणेनेत्याशङ्क्याह—'न च सुखाभाव एवे'त्यादि ( २५३-३ ), पातनायामेव व्याख्यात, क्वचित् 'सुखभावे' त्यादिपाठः स चाशुद्ध इव लक्ष्यत, अत्र हेतुमाह—'तस्यानुभूयमानत्वादि'ति, एतदुक्त भवति-सुखमप्यस्तीत्यनुभवादेव भवता निश्चीयते, स चानुभवो दु खेऽप्यस्ति, न चोक्तकल्पनामात्रादनुभूयमानमपि निषेद्धु शक्यते, एवम्भूतकल्पनाया विपर्ययेणापि कर्त्तु शक्यत्वात्, तस्माद्दु खस्याप्युक्तनीत्या वास्तवत्वात्तदनुरूपेण पापलक्षणेन हेतुना भाव्यमिति, अनुमानतो दर्शयति—'ततश्चेत्यादि,' 'न च पुण्यलेश एवे'त्यादि ( २५३-४ ), तस्याल्पस्यापि स्वल्पसुखनिर्वर्त्तकत्वादित्यादि पूर्वमेवोक्तमिति भाव , ननु पथ्याहारलक्षणो दृष्टान्त पूर्वमुक्त स कथं ज्ञेय इत्याशङ्क्याह—'एव दृष्टान्तोऽपी'त्यादि, स्वल्पोऽपि पथ्याहार आरोग्यतासुखहेतुरेव भवति, न ह्यणीयसोऽपि हेमपिण्डादित्याद्युक्त्वा सोऽप्याभासनीयो-दूषणीय इति भाव । 'सर्वथा सम्मिश्रसुखदु खाख्यकार्यप्रसङ्गादि'ति ( २५३-६ ), अयमत्र भावार्थो-यदा कारण तुल्यसुखदु खाख्य भवति तदा कार्यमपि

तुल्यसुखदु खाशमेव प्राप्नोति, न चेत्थ दृश्यते, एतदाह–'असदृशे त्यादि, यदि पुन कारणेऽपि सुखाशो दु खाशो वा हीनाधिकोऽभ्युपगम्यते तदा सुखदु खयोर्भेद स्यादिति भाव, एतच्चोत्तरत्र स्वयमेव 'यद्यद्वावपि यस्ये'त्यादिना (२५३–१०) वक्ष्यति, निरशसम्मिश्रसुखदु खाख्यकारणाभ्युपगमे दूषणान्तरमाह—'न च सर्वथे त्यादि (२५३–७), यद्यपि कस्यचिज्जीवस्य सुखदु खात्य निरश कारण महद् अल्प वा कस्यचित् तथापि–अस्मिन् भेदे सत्यपि कार्यस्य हेतु धर्म्मानुविधायित्वात् स्वरूपेण योऽसौ प्रमाणत इति–परिमाणमाश्रित्य अल्पत्वबहुत्वलक्षणो भेदस्त विहाय नापरो भेद – सुखदु खाशयोर्हीनाधिकत्वलक्षणो युज्यते, एतदुक्त भवति–यादृशोऽखण्डस्यैव कारणस्याल्पबहुत्वलक्षणो भेदस्तादृश कार्येऽप्यस्तु, न पुन सुखदु खाशयोर्हीनाधिकत्वलक्षण इति, तस्मादन्यत्सुखातिशयस्य निमित्तमित्याद्युक्ते पराभिप्रायमाश ङ्क्याह—'न च सर्वथे'त्यादि (२५३–९), सुखातिशयस्य निबन्धन योऽशस्तस्य वृद्धि कर्त्री सुखातिशयाय कल्पते–सुखाति "यकारण भवतीति न वाच्यमिति योग, कया हेतुभूतया ?–दु खातिशयस्य कारण योऽशस्तस्य हान्या सर्वथैकस्येति–साभि प्रायिकमिद सर्वथैकत्वात्तस्य, पापाशहान्या पुण्याशे वृद्धिमुपगते सुखातिशयो भवतीत्यादिकल्पना न युज्यत इति भाव, कस्मादित्याह–'भेदे त्यादि (२५३–१०), पुण्यपापयो कथञ्चिदभेद इति दर्शयति—'यत साते'त्यादि (२५३–११), शुभायुर्नामगोत्राणी'ति शुभशब्द प्रत्येकमपि सम्बध्यते, ततश्चायुष्क शुभमिन्द्रादीना, नाम तु शुभ यश कीर्त्तितीर्थक-रादेयसुभगसुस्वरादि, गोत्र तु शुभमुच्चैर्गोत्र, एता कर्म्मप्रकृतय पुण्य, शेपास्तु मिथ्यात्वनरकगत्यादय पाप, अत्र च सम्यक्त्वपुञ्जहास्यरतिपुरुषवेदाना पुण्यत्व सैद्धान्तिकमतानुसारतो द्रष्टव्य, कार्म्मग्रन्थिकास्तु न मन्यन्त एव, यतो

मोहनीयभेदा एते, मोहनीय च पापमेव, यदाह—"मोहनीय सर्वमशुभ" शेष सुबोध, नवम समास ॥ दशम सुगम एव । एकादश आरभ्यते—'जरामर्य वा एतत्सर्व यदग्निहोत्र'मिति ( २५४–१३ ), अस्य व्याख्या—यदेतदग्निहोत्र बहुभि प्रकारैर्वेदे प्रतिपाद्यते एतत्सर्वमपि, किं ?–अभ्युदयार्थिभि कर्त्तव्यमिति क्रियाध्याहार , कियन्त काल यावदित्याह—'जरामर्य वे'ति जरा च मारश्च जरामारौ तयोर्भाव इति यण् छान्दसत्वाच्च शेषस्य निपातने सति जरामर्यमिति भवति, वाशब्द चैवकारार्थे प्रभासो मन्यते, ततश्च बालकालादारभ्य यावज्जरामरणे आगच्छतस्तावन्तमेव काल–यावज्जीवमित्यर्थ , इद तु वक्ष्यमाणनीत्या निर्वाणनास्तित्वाभिधायक, तदस्तित्वाभिधायकमाह—"द्वे ब्रह्मणी'इत्यादि, ब्रह्मशब्दस्तत्ववचन , 'तत्र पर सत्य'मिति–निर्वाण निरुपचरितत्वेन तस्यैव परमार्थत सत्यत्वात् अपर तु तत्त्वज्ञानमिति, पूर्ववाक्याद्यथा निर्वाणनास्तित्व तथा दर्शयति—'अग्निहोत्रे'त्यादि ( २५४–१४ ), भूतानि–पश्वादीनि तेषा वधस्तेन होतु उपकारो भूतो–जातो यस्या सा तथा, यदिवा भूतवधोपकारे भूता–प्राप्ता तद्भावस्तस्मात्, शबलाकारा–सदोषा जरामर्यवचनाच्च यावज्जीववचनाच्च सदा इयमेव कर्त्तव्येत्युक्त, सैव तर्हि निर्वाणफला भविष्यतीत्याह—'सा चे'त्यादि (२५४–१५), अभ्युदय –स्वर्ग तत्फलैव, एतदुक्त भवति–सज्ज्ञानध्यानादिकया हि शुद्धक्रियया निर्वाणमवाप्यते, अग्निहोत्रक्रिया तु शबलत्वात्स्वर्गफलैव, यावज्जीववचनाच्च शुद्धक्रियारम्भक्षणो न लभ्यते इति कारणाभावान्निर्वाणाभाव इति, ननु च भवताऽपि पर्यायिक्षणस्य पर्यायरूपतया कथञ्चिदभाव इष्यते ततश्च भवन्मतेऽपि कथ पर्यायान्तरोत्पत्तिरित्याह—'तदभावस्य सर्वथाविशिष्टत्वा'दिति (२५४–२२ तदभावस्य च सर्वदाऽविशिष्टत्वात् मू०) एतदुक्त भवति–अस्माभिः कथञ्चि-

च्छब्दविशेषितकारणाभावस्याभ्युपगतत्वाद्युज्यते पर्यायोत्पत्ति, पर्यायेण कथञ्चिदवस्थितत्वाद्, भवता तु कारणाभावस्य सर्वथाशब्दविशिष्टस्याभ्युपगमात्कुतस्तदुत्पत्ति, ? क्वचित्सर्वदा विशिष्टत्वादितिपाठ तत्रापि विशिष्टत्व कारणाभावस्य सर्वथा शब्दविशेषितत्वाद्द्रष्टव्य, शेष सुगम, समास एकादशम ॥ अथ क्षेत्रादिगणभृद्व(गणभृत्क्षेत्रादि)कव्यता आह–ननु मण्डिको ज्येष्ठो मौर्यस्तु लघुतरो, गृहवासप्रतिपादकगाथाया तु ज्येष्ठस्य त्रिपञ्चाशद्वर्षाणि गृहवास उक्तो लघुतरस्य तु पञ्चषष्टि दीक्षा द्वयोरप्येकस्मिन्नेव दिने तत्कथ न विरोध, सत्य, किन्तु तत्त्वमिह केवलिनो विदन्ति, केवल गणभृन्नामप्रतिपादकगाथाया व्यत्ययपाठे गृहवाससर्वायुष्कप्रतिपादिकासु वा गाथासु च व्यत्यये सति सर्व सुस्थ भवति, धनदेवे पञ्चत्वमुपागते मौर्येण गृहे धृता इति वृत्त्यक्षराणा मौर्ये पञ्चत्वमुपगते धनदेवेन धृता इति व्यत्यये वा सति सुस्थ भवति, तत्तु न क्रियते विशिष्टसम्प्रदायाभावादिति ॥ 'तीसाया रसे'त्यादि ( २५६–१० ) गाथा सुगमत्वेन वृत्तौ न विवृता, तत्र चउदसदुग चेति पाठस्तत्र द्वौ वारौ चतुर्दशेति द्रष्टव्य। 'वर्त्तनादिलक्षण'इति ( २५७–६ ), वर्त्तना–द्रव्यस्थिति आदिशब्दात्प्रतिक्षणभावी परिणाम । 'एक कालशब्दःप्रागि'ति ( २५७–९ ), 'उद्देसे निद्देसे य' गाथाया। 'द्व्यस्कन्धादे'रिति ( २५७–१५ ), सचेतनस्य–देवादे अचेतनस्य–द्व्यणुकस्कन्धादे अथवा 'चेतनस्येत्यादि' पूर्व समस्त पद अत्र तु चेतनमित्यत्रापि षष्ठी द्रष्टव्या, ततो व्यस्त पदद्वयमिति पूर्वव्याख्यानाद्भेद । 'अथवा द्रव्य तु तदेवे'ति ( २५७–१७ ), 'कालश्चेत्येके' ( तत्त्वा० अ० ५ सू० ३८ ) इतिवचनादेकीयमतेन कालस्याभावादिति भाव । 'वर्त्तनादिमयो यथायुष्ककाल' इति (२५८–४), ननु च द्रव्यकालोऽपि वर्त्तनादिमय एवोक्तस्तत्कथ न सङ्कीर्णता ?, सत्य, किन्तु स द्रव्याणा सामान्येन अय त्वायुष इति

विशेष । अथ सामाचारी व्याख्यायते,—'काले-कालविषया सामाचारीति' (२५९-६), इय सर्वाऽपीच्छाकारादिका सामाचारी कालविषया-प्रस्तावनियता कस्याञ्चित्कस्मिंश्चित्प्रस्तावे क्रियमाणत्वात् । 'अपिश्चशब्दार्थे' इति (२६०-१२), 'तत्थवि इच्छाकारो' ( २५९ ) इत्ययमपिशब्दश्चशब्दार्थ, स चानुक्त समुच्चिनोति, ततश्च यद्यभ्यर्थयेत पर अनभ्यर्थितो वा तस्य कश्चित्किञ्चित्कुर्यादितीच्छाकारस्य विषयद्वय दर्शित, चशब्दसमुच्चितस्त्वपरोऽपि विषय 'अहवा सय करन्त इत्या दिना ( २६०-१३ ) दर्शयिष्यत इत्ययमत्र भावार्थ । 'लगस्स साहुस्स लद्धी अत्थि'त्ति ( २६२-८ ), भक्तपानलाभर लसीवनादिलक्षणा, 'एव चेव विराहेति'त्ति ( २६२-९ ) एवमेव लब्धिविद्रास्यति अकृतकार्यत्वादित्यभिप्राय । कुटी-वृहत्तरा पडाली-लघुतरकुटीति ( २६२-११ ) । 'सोहिया चत्ति' ( २६२-१३ ), सुहृद्भूता-स्निग्धा स्वजनभूता 'आदेसादिअप्पडितप्पणे'त्यादि ( २६३-१ ), आदेश -प्राघूर्णक तस्य तत्राया, यदा ह्याचाया भक्तपानाद्यानयनर लसीवनादिषु व्यग्रो भवति तदा दोषानाह-'सुत्तत्थेसु अ' गाहा ( २६३-२ ), सूत्रार्थयोरचिन्तन आदेश-प्राघूर्ण कस्तस्य स्वागत न कश्चित्करोति, वृद्धशिक्षकग्लानक्षपकादीना च न कश्चित्तप्तिं करोति, यदि ह्याचार्यो वैयावृत्त्यव्यग्रो न भवति ततस्तान् परत स्वतो वा उपचरत्येव । 'वाले'त्ति ( २६३-२ ), व्याल -सर्पस्तेन यदि कश्चित्सयतो दश्यते तदा पानकाद्यानयनाय गते सूरौ तदुपचारज्ञाभावात्कस्तमुपचरति?, एव वृत्तावपि यदुक्त 'वाले सप्पभए' तदनन्तरोक्तविधिनेत व्याख्येय । 'इड्ढीमाई अणिड्ढिय'त्ति ( २६३-२ ), ऋद्धिमति-सामान्ये सार्थवाहादौ आदिशब्दाद्राजामात्यादौ वादिनि च समायाते सौगतादौ यो दोषो-लाघवलक्षण स वृत्तिकारेणैवोक्त अनृद्धिमतस्तु भक्ताद्यर्थं समायातस्य आचार्यमपि

वैयावृत्त्ये नियुक्त दृष्ट्वा विपरिणामादयो दोषा इति गाथार्थ । 'प्रागुक्त दुष्कृतकारण'मिति ( २६३–२३ ), अस्या एव गाथाया प्रथमपादे 'ज दुक्कडति मिच्छे'त्यनेन यदुपात्तमित्यर्थ । 'सम्बद्ध एव ग्रन्थ' इति ( २६३–२४ ), यथास्या गाथाया पर्यन्ते पठ्यते तथैवेह योज्यते, द्वितीयव्याख्याने तु मिथ्याशब्दस्य पूर्वनिपात करिष्यत इति भाव । 'न ह्यसावप्यवश्य कर्त्तव्ये'त्यादि ( २६५–१७ ), अयमभिप्राय –कृतनैषेधिकीकोऽपि अवश्यकर्त्तव्यव्यापारान् करोत्येव कृतावश्यकीकोऽपि तानेव करोतीति कथ नेकार्थतेति । 'शेषकालमपी'त्यादि ( २६६–४ ), स्थानस्थितस्यापि सदनुष्ठानव्यापृतस्यावश्यकी द्रष्टव्येत्यर्थ । 'अथवा चेतयत'इत्यादि ( २६६–११ ), ननु पूर्व शयनमनुभवतीति व्याख्यात अत्र तु करोतीति व्याख्यायते, शय्याकरण च नावश्यमनुभवत एव, हस्तगृहीतसस्तारकस्यापि तदुपचारदर्शनात्तत्कथमस्य व्याख्यानस्य पूर्वस्मान्न भेद इत्याशङ्क्याह—'शयनक्रिया'मित्यादि (२६६–११), 'प्रतिक्रमणाद्यशेषे'त्यादि(२६६–१३), शय्या स्थान च यत्र चेतयते तत्र स्थाने नैषेधिकी भवतीति सम्बन्ध , कथम्भूत सन्नित्याह—'प्रतिक्रमणे'त्यादि, कथम्भूते स्थाने ? इत्याह—'एवविधे'त्यादि–एवविधावश्यककरणगुर्वनुज्ञारूपा यतीना या स्थितिक्रिया तया विशिष्टे, इद तु यते सम्भवदपि विशेषणमुपचारत स्थानस्योक्तम् । 'अनेने'त्यादि ( २६६–१७ ), अनेन 'एगग्गस्स पसतस्से'-( २६५–२० ) त्यादिना ग्रन्थेन मूलगाथाया 'आवस्सिइ च नितो' ( २६५–१० ) एतल्लक्षणाया , 'एताव'दिति ( २६६–१८ ), उत्तपादत्रय व्याख्यातमिति योग , किं कृत्वा ?–स्थितिरूपनैषेधिकीप्रतिपादनमधिकृत्य, कथम्भूत तत्प्रतिपादन ?–व्यञ्जन–शब्दस्तद्भेदे निबन्धन–कारण, एतदुक्त भवति–गमनरूपा पूर्व तावदावश्यकी प्रतिपादितैव, यदा त्वनन्तर

'सेज्ज ठाण च जहिं'इत्यादिना स्थितिरूपा नैषेधिकी प्रतिपाद्यते तदाऽसौ व्यञ्जनभेदनिबन्धन भरत्येन, गमनस्थिति-रूपस्य भेदस्य व्यञ्जनभेदनिबन्धनत्वात्, 'शय्यैव नैषेधिकी'त्यादि ( २६६–२४ ), शय्या-वसति सा च निषिध्यन्ते तस्या प्रविशद्भिर्बहि: सजातातिचारा इति कृत्वा नैषेधिकीत्युच्यते, तस्या शय्यानैषेधिक्या बहिस्तात्प्रविशन् साधु शेरना धून् प्रति ब्रूते-भो साधव शय्यानैषेधिक्या यदागमन तत्प्रत्यभिमुखोऽह, कया यदागमन ?-'नैषेधिक्या' नैषेधिकी शब्देन चेहोपचारान्निषिद्धारमन सम्बन्धि शरीरमुच्यते अत शरीरेणागमन प्रत्यभिमुखोऽहं, सवृतगात्रैर्भवद्भिर्भाव्यमि-त्युक्त्वाऽवश्यकर्तव्यसयमव्यापारपरिपालनाय वसतौ प्रविशति, आवश्यिक्यामप्यवश्यकर्तव्ययोगा एव क्रियन्त इत्ये-ऽत्र विशेष ?, सत्यं-किन्तूत्तरार्द्धे निषिद्धात्माऽपीत्यत्र अपिशब्दाक्षिप्त पक्षान्तर द्रष्टव्य, किन्तु तद् ?, उच्यते, आवश्यिकी तावदावश्यकयुक्तस्यैव भवति, निषिद्धात्माऽपीत्थम्भूत एव, पूर्वार्द्धे त्वयमेवार्थो व्यत्ययेनोक्त इति भेद । 'तत्राऽऽस्ता ताव-द्गृहस्थोपसम्पदि'ति ( २६७–२१ ), उपरि वक्ष्यमाणत्वादित्यभिप्राय । 'गाथाद्वय निगदसिद्धमेवे'ति ( २६८–१५ ), अत्र सार्द्धगाथया वर्तनासन्धनाग्रहणस्वरूपमुक्त, द्वितीयगाथापश्चार्द्धेन तु प्रसङ्गाद् अर्थग्रहणविधिमभिधित्सुरुत्तरग्रन्थस-म्बन्धनायाह—अर्थग्रहणे प्राय एष -वक्ष्यमाणो 'मज्जणनिसिज्जे' ( २६८–२७ ) त्यादिको विधिर्भवति ज्ञातव्य, प्रायो-ग्रहणात्सूत्रमपि प्रमार्जितभूमावध्येतव्यमित्यादि सूत्रगतमपि कञ्चिद्विधि सूचयति । अधिकृतविधि -व्याख्याविधिस्तत्प्रति-पादनार्थं 'मज्जणनिसेज्जे'त्यादि द्वारगाथा ( २६८–२७ ), अस्या व्याख्या-प्रमार्जन निषद्या:-अक्षा व्याख्यातुं कृति

कर्म विघ्नोपशान्तये अनुयोगारम्भाय कायोत्सर्गो यश्च व्याख्यावसाने चिन्तनिका कारयति स इह ज्येष्ठो विवक्षित तस्मै यद्वन्दनक एतेषा प्रत्येक विधिर्वक्तव्य , आह—ननु ज्येष्ठ किं पर्यायेण उत लघुरपि व्याख्यालब्धिसम्पन्नो भापक इह ज्येष्ठ इत्याशङ्क्याह—भापमाण इह ज्येष्ठो न पर्यायतोऽतस्त लघुमपि भापक वन्दध्वम् , एतच्च स्वयमेव सप्रपञ्च वक्ष्यतीति गाथार्थ । 'गुरुपरितोपजातेने'ति ( २६९–८ ), गुरौ परितोपो जातोऽस्येति विग्रह । 'प्रत्युचारकश्रवणस्ये'ति ( २६९–१४ ), प्रत्युच्चारण प्रत्युच्चार –चिन्तनिका तद्रूपश्रवणस्याभावादिति । 'अन्यभावादिपरिग्रह' इति(२७०–१७)- एतदुक्त भवति—यदि स्वगच्छे अन्यस्य वैयावृत्त्यकर्त्तु साधोर्भाव –सत्ता भवति तदाप्यन्यत्र गच्छति, स्वगच्छे अन्येनैव साधुना वैयावृत्त्यकरणात् । तथा 'नापूरयन्नि'त्यादि ( २७१–१७ ), अपूरयन्नेव यदा वर्त्तते तदैव सारणा विसर्गो वा इत्येव न इति योग । सामाचारी समाप्ता । अथ अज्झवसाण 'सावि त पलोयती'त्यादि (२७२–१४), यावदेपा निपिद्धापि न तिष्ठति तावदसौ तथैव तामुदक प्रक्षिपन्तीं विहाय गतस्तत सा 'तारे पयोयस्तेति'त्ति तावत्प्रवत्तितवती भूमौ करकेणोदकमिति गम्यते यावदसौ अदृश्यो जात , 'ओयल्ल'त्ति मृता । 'मोक्खाणासासयादोस'त्ति (२७४–१३),यदि कर्म्मोपक्रम्यते अप्राप्तकालमपि तर्ह्युक्तनीत्याऽकृतागमकृतनाशौ प्राप्नुत ततश्च मोक्षेऽप्यनाश्वास , अकृतस्यापि सिद्धाना कर्मण आगमनप्रसङ्गात्ससारप्राप्ते कृतनाशाच्च सर्वससारिणा मुक्तिप्राप्तेरितिभाव , उत्तरमाह–'नही'त्यादि, अग्निकरोगो–भस्मक व्याधि । 'अन्ये तु द्वितीयभङ्ग'इत्यादि (२७६–३), सिद्धानामपि चारित्राद्यभ्युपगमादिति भाव । 'बीय दुतीयाईए' गाहा ( २७६–७ ), अस्या व्याख्या–द्वितीय तथा द्व्यादींस्त्यादींश्च भङ्गान् वर्जयित्वा शेषा भङ्गा यथाक्रम औदयिकऔपशमिकक्षायि

कभावेषु द्रष्टव्या, 'वीतय सेसे'त्ति शेषे-क्षायोपशमिकपारिणामिकभावद्वये द्वितीयवर्ज्यास्त्रयस्त्रयो भङ्गा भवन्ति, एतेषां भङ्गानां विषयमाह–'भवमिच्छे'त्यादि (२७६–८), अयमत्र भावार्थ –इह सादि सपर्यवसान इति प्रथमो भङ्ग सादिरपर्यवसान इति द्वितीय अनादि सपर्यवसान इति तृतीय अनादिरपर्यवसान इति चतुर्थ, तत्र द्वितीयं वर्जयित्वा शेषास्त्रय औदयिके भवन्ति, एतेषां च विषय प्रथमभङ्गस्य भवो नारकादि, शेषभङ्गद्वयस्य तु वृत्तिकारोक्तनीत्या विषयो मिथ्यात्व, औपशमिके तु द्व्यादिभिर्वर्जितैराद्य एवावशिष्यते, तस्य च विषय सम्यक्त्व, क्षायिकस्य तु त्र्यादिभिर्वर्जितैराद्यभङ्गद्वयमवशिष्यते, तयोश्च यथासङ्ख्यं वृत्तिकृदुक्तनीत्या चरण सम्यक्त्व च विषय, क्षायोपशमिके तु द्वितीयवर्ज्यास्त्रयो भङ्गा भवन्ति, तत्र प्रथमभङ्गस्य चत्वारि ज्ञानानि विषय शेषभङ्गद्वयस्योक्तनीत्या 'इयर'त्ति अज्ञान विषय, पारिणामिके तु द्वितीयवर्ज्यास्त्रयो भङ्गा, तेषां यथासङ्ख्य परमाण्वादयो भव्यत्व च विषय इति गाथार्थ। 'तस्याद्धाकालस्वरूपत्वा'दिति (२७६–१३), प्रमाणकालो हि दिवसरात्रिलक्षणोऽद्धापर्याय एव पर्यायश्च भाव एवेति भावार्थ। 'गत मूलद्वारगाथे'त्यादि (२७६–२१), ननु 'पथ किर देसित्ता' इत्यादिना यावद्गणधरवक्तव्यता समाप्ता तावन्महावीरलक्षणस्य गणधरलक्षणस्य च द्रव्यस्य मिथ्यात्वादिभ्यो निर्गम प्रतिपादयता द्रव्यनिर्गम समर्थितो भवति, क्षेत्रकालभावरूपस्तु निर्गमोऽद्याप्यव्याख्यात एव, ततश्च तस्मिन् तृतीये द्वारेऽसमाप्ते किमिति 'उद्देसे निद्देसे य निग्गमे'त्यादिमूलद्वारगाथायाश्चतुर्थपञ्चमद्वाररूपौ क्षेत्रकालौ व्याख्यातावित्याशङ्क्याह–'इह च क्षेत्रकाले'त्यादि, क्व निर्गमाङ्गता क्षेत्रादीनां व्याख्यातेति चेदुच्यते–"नाम ठवणा दविए खत्ते काले तहेव भावे अ। एसो उ निग्गमस्सा निक्खेवो छव्विहो होइ" (१४५)त्ति अस्या गाथाया, अयं चात्र

भावार्थ –इह निर्ग्गमान्तर्गतौ क्षेत्रकालौ सामान्यौ, सर्वस्यापि वस्तुनो निर्ग्गमे विचार्येऽनयोरवतारात्, मूलद्वारगाथान्तर्गतौ च क्षेत्रकालौ प्रस्तुतसामायिकविपयत्वेन महसेनवनप्रथमपौरुपीरूपत्वाद्विशेपरूपो, विशेपे च व्याख्याते सामान्य व्याख्यातमेव भवतीति प्रस्तुतावपि निर्ग्गमान्तर्ग्गतौ क्षेत्रकालौ विहाय विशेपरूपत्वान्मूलगाथाप्रतिवद्धौ व्याख्यातवान् सूरि, तद्व्याख्याने च सामान्यरूपनिर्ग्गमान्तर्गतक्षेत्रकालव्याख्या कृतैव भवति, एव च लाघवसिद्धि स्याद् अतो नाम स्थापनाद्रव्यरूपो निर्ग्गम पूर्व व्याख्यात क्षेत्रकालौ तूक्तनीत्या व्याख्यातौ, अतो भावनिर्ग्गम एवावशिष्यते, तमिदानीं व्याख्यानयति, स्यादेतद्–यथा–मूलगाथान्तर्गतक्षेत्रकालयो प्रस्तुतसामायिकविपयत्वेन विशेपरूपता तथा निर्ग्गमस्यापि कस्मा नेष्यते ?, तस्यापि तद्विपयत्वान्मूलद्वारगाथापठितत्वात्, तदयुक्त, अभिप्रायापरिज्ञानाद्, भावनिर्ग्गम एव ह्यत्र प्रस्तुतसामायिकविपयतयाऽभिप्रेतो द्रव्यादीना तु तदुपकारित्वमात्रादेव निर्गमान्तर्गतता अमुख्यैव, तथा च तस्यामेव निर्ग्गमप्रतिपादकगाथाया वृत्तिकृतोक्तम्–अत्र त्वधिकार प्रशस्तभावनिर्ग्गममात्रेणैव शेपैरपि निर्गमाङ्गत्वादिति, तस्मान्मुख्यतया प्रस्तुतसामायिकविपयत्वान्निर्ग्गमान्तर्ग्गतक्षेत्रकालयो सामान्यरूपतैवेति, यद्येव भावनिर्ग्गमोऽपि तर्हि नेह वक्तव्यो यतो निर्गमप्रतिपादकगाथाया भावनिर्ग्गमो भावपुरुप एवाभिप्रेत, तथा च तत्र वृत्तिकारेणोक्तम्–इह च क्षेत्र महसेनवन काल प्रथमपौरुपीलक्षणो भावश्च भावपुरुप इति, स च भावपुरुपो 'दवाभिलावचिन्धे' इत्यादि गाथाया वक्ष्यति। 'अथवा भावेत्ति–भावनिर्ग्गमप्ररूपणायामधिकृताया'मित्यादि (२७७–१८), भवताऽपि चोक्त क्षेत्रकालपुरुपाणा निर्गमाङ्गता व्याख्यातैव, न पुनरिद त्वयाऽप्युक्त–क्षेत्रकालभावाना निर्ग्गमाङ्गता प्रतिपादितैवेति, तदेव

भावनिर्गमप्रतिपादनमिहासङ्गतमेव, सत्य, किन्तु निर्गमप्रतिपादकगाथाया यदुक्त भावश्च भावपुरुष इति, अत्र तु यदा भावेन क्षायिकादिना उपलक्षित पुरुषो भावपुरुष इति व्युत्पत्ति क्रियते तदा 'गइयम्मि वट्टमाणस्स निग्गय'मित्यादिना क्षायिकभावोपलक्षितमहावीरलक्षणपुरुषान्निर्गतमिद सामायिकमित्यादिप्ररूपण न किञ्चिद्विरुध्यते, यदा तु भावपुरुष इति शुद्धपुरुष इति व्याख्यायते तदा 'दव्वाभिलावचिन्धे' इत्यादिगाथाप्रतिपादित एव भावपुरुष इति न दोष, इद चात्र पुरुषद्वयमप्यभिप्रेत लक्ष्यते, 'गइयम्मि वट्टमाणस्से'त्यादिगाथोपन्यासात् दव्वाभिलावेत्यादिवक्ष्यमाणगाथेत्यल प्रसङ्गेन, अत्र च निर्गमद्वारव्याचिख्यासयेत्यस्यानन्तर क्वचिदाहशब्दस्य पाठो दृश्यते स चाशुद्ध एव लक्ष्यते। 'तन्तुसयोगे'त्यादि ( २७८–१० ), तन्तुसयोगा असमवायिन इति योग, पटस्येति गम्यते, हेतुमाह—पटाख्य यत्कार्यरूप तन्त्वपेक्षया द्रव्यान्तर तस्माद्दूरवर्त्तित्वात्, एतदपि कुत इत्याह—कारण यत्तन्तुरूप द्रव्यान्तर च तत् पटापेक्षया, तद्धर्मत्वात्सयोगाना, यो ह्यन्यधर्म्म सोऽन्यस्य दूरत एव भवति, सयोगाश्च द्व्यादितन्तुमीलनरूपास्तन्तुधर्मत्वात्पटाख्यकार्यस्य दूरवर्त्तिन इत्यसमवायिकारणरूपा। 'निर्वर्त्य चे'त्यादिकारिका ( २७८–१७ ), अस्या व्याख्या—निर्वर्त्य विकार्य प्राप्य वा यथाक्रम ओदनकाष्ठभास्करादिक वस्तु क्रियाफल 'कर्त्तुरीप्सित' ( पा–१–४–४९ ) क्रियाविषयत्वेनेष्टमित्यर्थ तत्कर्म भवतीति योग, कथम्भूत ?–दृष्टादृष्टसस्कार निर्वर्त्त्ये विकार्ये वा कटादिकर्म्मणि शलाकारचनादि कश्चिद् दृश्यते सस्कारो न प्राप्ये आदित्य पश्यतीत्यादाविति तद्दृष्टादृष्टसस्कार, अनया च कारिकया निर्वर्त्तनादिक्रियाविषयत्वेनेष्टमेव कर्म्म भवतीति प्रतिपादितमिति प्रकृते उपन्यस्ता। 'तथा सम्प्रदानमि'त्यादि ( २७८–१८ ), कुम्भकारादिना निष्पद्यमा-

नस्य घटस्य सम्प्रदान–जनपदस्तस्य जनपदलक्षणस्य सम्प्रदानस्य कर्म्मणा–कार्येण घटलक्षणेन करणभूतेनाभिप्रेतत्वाद्-दित्सया व्याप्तत्वाद्, यदि नाम घटदित्सया जनपदलक्षण सम्प्रदान व्याप्त तथापि कथ जनपदलक्षणस्य सम्प्रदानस्य घट प्रति कारणता इत्याह—'न सम्प्रदानविशेषमन्तरेण तस्य घटस्याभावात्' ( २७८–१९ ), यदि हि निर्वर्त्त्यघटो यस्मै दातव्य स एव जनपदादिर्न स्यात्तर्हि घटस्याकरणमेव श्रेय', अतो घटक्रियाऽन्यथानुपपत्ते कारणमेव सम्प्रदान, प्रयोगश्चात्र–यो यमन्तरेण न सभवति स तस्य कारणं, यथा घटस्य मृत्पिण्डो, न च भवति कर्त्तृकरणकर्म्मसम्प्रदानापादानाधिकरणकारकषट्कान्तर्गतैकतरस्याप्यभावे घटादि कार्यजात, तस्मात्षण्णामपि कारकाणा कार्यं प्रति कारणताऽभ्युपगन्तव्या । 'मतिश्रुते त्वि'त्यादि ( २८०–२६ ), वाह्यलिङ्गरूपं यदिन्द्रियलक्षण कारण तदपेक्षणात्परोक्षत्वेन विशिष्टप्रत्ययत्वाभावाच्चैतयोर्ग्रहणमिति भाव , अवध्यादीना भवति प्रत्यक्षताऽनयोर्नत्यत्र का युक्तिरित्याद्यत्र बहुवक्तव्य । 'द्वयोर्द्वयोरि'त्यादि ( २८१–१४ ), यत्र पूर्वं विशेषणमुच्चार्य ततो विशेष्यमुच्चार्यते सा आनुकूल्येन गमनाद्गतिरुच्यते व्यत्ययोच्चारणे त्वागति एताभ्या च जीवादिपदार्थस्वरूपं लक्ष्यते–विचार्यते इतिकृत्वा लक्षणमेते भवत । 'रूवी घडो'त्ति गाहा ( २८१–२२ ), 'नीलोत्पल चे'ति, चशब्दोऽप्यर्थे तस्य च व्यवहित सम्बन्ध , ततश्च न केवलमिह सिद्धान्ते, लोकेऽपि विकल्पनियमादयो भङ्गा पूर्वपदव्याहतादिस्वरूपा भणिता इति योग , विकल्पे–एकस्मिन् पक्षे नियमो यस्य स विकल्पनियम स आदिर्येषा उभयानियमोभयनियमाना ते तथा, तत्र रूपी घट इति पूर्वपदव्याहत , कथमिति चेदुच्यते–घटो रूप्येव, रूपी पुनर्घट पटो वा भवति, एव शेषभङ्गेष्वपि भावना कार्या, चूतो द्रुम इत्युत्तरपदव्याहत , नीलोत्पलमित्युभयपदव्याहत ,

जीव सचेतन इत्युभयपदाव्याहत , अत्राद्यौ विकल्पनियमौ तृतीय उभयानियम चतुर्थस्तूभयनियम इति गाथार्थ । द्रव्यतो नानाता दर्शिता क्षेत्रकालभावनानाता त्वतिदिशन्नाह—'एवमेकादिप्रदेशे'त्यादि ( २८२–१ ), तत्र क्षेत्रतस्तद्रव्यनानाता–एकप्रदेशावगाढाना परस्परतो भिन्नता अन्यद्रव्यनानाता त्वेकप्रदेशावगाढस्य द्विप्रदेशावगाढादिभ्यो भिन्नता कालतस्तद्रव्यनानाता–एकसमयस्थितीना परस्परतो भिन्नता अन्यद्रव्यनानाता त्वेकसमयस्थितिकस्य द्विसमयस्थितिकादिभ्यो भिन्नता, भावतस्तद्रव्यनानाता एकगुणकालकाना परस्परतो भिन्नता, अन्यद्रव्यनानाता त्वेकगुणकालकस्य द्विगुणकालकादिभ्यो भिन्नतेति भावनाऽत्र द्रष्टव्या । भोमसुमिणगाहा (२८२–३) भौम–भूकम्पादि स्वप्न प्रतीत आन्तरिक्ष–गन्धर्वनगरादि दिव्य–व्यन्तरादिकृतमट्टट्टहासादि आङ्ग–शिर स्फुरणादि स्वरनिमित्त तु 'सज्ज रवइ मयूरो' इत्यादिलक्षण स्त्रीपुरुषादीना सामुद्रिकप्रतिपादित व्यञ्जन–मषतिलकादि, एतच्चाष्टप्रकारमपि लक्षण भवति अनेनापि शुभाशुभस्य लक्ष्यमाणत्वादिति । 'तथा लक्षणमिद'मिति ( २८२–१३ ), तथाशब्दो द्रव्यलक्षणापेक्षो यथाऽनन्तरोक्त द्रव्यलक्षण तथा भावेऽपि लक्षण इदमिति, यद्वृत्तावुक्त तथा 'भावानामौदयिकादीना'मित्यादिना, एतच्च चेतसि व्यवस्थितमिदमा व्यपदिशति निर्युक्तिकृद्, अत एव च 'अहवावि भावलक्खण'मित्यत्र अथवाशब्द उपपन्नो भवति, अन्यथा हि पूर्व पक्षान्तरस्य भावलक्षणे दर्शितत्वान्निरर्थक एव स्यादिति । 'निलयनप्रस्थके'त्यादि ( २८३–१० ), तत्र निलयन वसनमित्यनर्थान्तर, तद्दृष्टान्तो यथा–कश्चित्केनचित्पृष्ट क्व वसति भवान्?, स आह—लोके तत्रापि जम्बूद्वीपे तत्रापि भरतक्षेत्रे तत्रापि मध्यमखण्डे तत्राप्येकस्मिन्जनपदे नगरे गृहे इत्यादीन्सर्वानपि विकल्पान्नैगम इच्छति, प्रस्थको–धान्यमानविशेषस्तद्दृष्टान्तो यथा—

तद्योग्य काष्ठ वृक्षावस्थायामपि तदनुकीर्त्तिक स्कन्धे कृत गृहमानीतमित्यादि सर्वास्वप्यवस्थासु नैगम प्रस्थकमिच्छति, ग्रामोदाहरण यथा—विवक्षितग्रामवास्तव्यप्रधानकतिपयपुरुषदर्शनेऽपि ग्रामोऽसावितीच्छति नैगम । 'भमराइ गाहा'- ( २८३–२४ ), इह भ्रमरकोकिलादि कृष्णतयोपलभ्यमानोऽपि निश्चयमतेन पञ्चवर्ण्ण, शेषवर्णचतुष्टय हि न्यग्भूतत्वात्तत्र न दृश्यते न पुनर्नास्तीति प्रतिपद्यतेऽसौ, तथा प्रज्ञप्ति –'भमरे ण भते 'कइवण्णे कइगधे कइरसे, कइफासे ?, गोतमा— इत्थ दो नया कज्जति, तजहा—निच्छयनए य वावहारियनए अ, वावहारिअनयस्स कालए भमरे, निच्छयनयस्स पचवण्णे दुगधे पचरसे अट्ठफासे इत्यादि,एव नीललोहितपीतशुक्लतया व्यवहारतोऽवगतेष्वपि वस्तुषु निश्चयत पञ्चवर्णताऽवगन्तव्या, तदेव भ्रमरादौ निश्चयनयमतेन पञ्चवर्ण्णे निश्चिते सति व्यवहारस्य को निश्चयार्थ इत्याह—'सो विणिच्छयत्थो'त्ति ( २८३–२५ ), स विनिश्चयार्थ इति ज्ञेय , क इत्याह—यत्तदोनित्याभिसम्बन्धाच्छेषवर्णेषु सत्स्वपि य कृष्णोऽयमित्यादिरूपो विनिश्चय समुत्पद्यत इति गम्यते, 'जम्मि वा जणवयस्स अत्थे'ति,विनिश्चय इतीहापि सम्बध्यते, ततश्च यस्मिन्वा कस्मिश्चिदर्थे जनपदस्य–गोपालाङ्गनादिरूपस्य नामस्थापनाद्रव्यभावानामन्यतररूपेण अतीतानागतवर्त्तमानान्यतररूपेण वा निश्चय समुत्पद्यते स विनिश्चयार्थ , किमुक्त भवतीति तात्पर्यार्थमाह—'जो गेज्झो'त्ति, अन्येषु सत्स्वपि बहुष्वशेषगोपालाङ्गनादिजनपदस्योद्भूतशक्तितया यो ग्राह्योऽश स विनिश्चयार्थ तदर्थ व्रजति व्यवहार इति गाथार्थ । यस्मिन्नेवांशे जनपदस्य निश्चयो भवति किमित्यसौ तमेव गमयति सतोऽपि शेषांशान्मुञ्चतीत्याह—'बहुतरउत्ति य'इत्यादि, स एव बहुतरांशो यत्र जनपदस्य निश्चय उत्पद्यत इति तमेवांश गमयति—व्यवहारपथमवतारयति,येषु त्वंशेषु लोकस्य निश्चयो न भवति

तान्सतोऽपि मुञ्चति व्यवहारो नय ,किं कुर्वन्? लोक-लोकव्यवहारमिच्छन्, कया?-सव्यवहारपरतया, सव्यवहारस्वरूपत्वादेव तस्येति गाथार्थः । 'प्रति प्रति चोत्पन्नमि'ति ( २८४-३ ), एकैक स्वामिनमाश्रित्योत्पन्न, एतदेवाह—'भिन्न-परकी'त्यादि, भिन्ना व्यक्तय -स्वामिन्यो यस्य तत्तथाभूत, ऋजुसूत्रो हि वर्त्तमानक्षणभाव्येव वस्त्विच्छति तदपि भिन्नव्यक्तिस्वामिक, तन्मतेन हि यद्देवदत्तस्य वित्त तद् यज्ञदत्तस्यावित्तमेव, तदपेक्षया वित्तकार्याकारणाद्, यज्ञदत्तस्यापि यद्वित्त तद्देवदत्तस्यान्यवित्तमेव तत एव हेतो ,तस्माद्द्वयोरपि वित्तयोभिन्नस्वाम्यपेक्षयैव वित्तत्वमिति भिन्नव्यक्तिस्वामिता । 'ऋजुसूत्र ऋजुश्रुतो वे'ति ( २८४-४ ), शब्दद्वयस्य यथाक्रम व्युत्पत्तिमाह—'तत्र ऋजु-वर्त्तमान'मित्यादि । 'नामस्थापनाद्रव्यविरहेण समानलिङ्गवचने'त्यादि ( २८४-१० ), लिङ्ग च वचनञ्च लिङ्गवचने समाने लिङ्गवचने येषा ते च ते पर्यायध्वनयश्च-इन्द्र शक्र पुरन्दर इत्यादयस्तद्वाच्यत्वेन च, तदनेनातिक्रान्तवक्ष्यमाणनयद्वयाद्भिन्नताऽस्य सूचिता,अतिक्रान्तनयो हि नामादिचतुर्विधमपि भिन्नलिङ्गवचनपर्यायध्वनिवाच्यमेव च वस्त्विच्छति अय तु भावरूपमेव समानलिङ्गवचनपर्यायध्वनिवाच्यमेव च तदिच्छतीत्यनयोर्भेद , वक्ष्यमाणस्त्वेकस्मिन्वस्तुन्येक एव ध्वनि प्रवर्त्तते न समानलिङ्गवचना अपि बहव इत्यभिमस्यते, अतो नयद्वयादप्यस्य भिन्नता, एवमन्येष्वपि नयेषु विशेषणानि यथासम्भवं पूर्वोत्तरनयभिन्नतासूचकत्वेन द्रष्टव्यानि । 'तस्यार्थपरिग्रहादि त्यादि ( २८४-११ ), तस्य-प्राधान्येनाङ्गीकृतशब्दस्य वाच्यत्वेन सम्बन्धी योऽर्थो घटादिलक्षणस्त परिगृह्णाति, नयो-ज्ञानविशेष इत्युपचारात्सोऽपि ज्ञानस्वरूपो नय शब्द इत्युच्यते । 'न च भिन्ने'त्यादि ( २८४-१२ ), ननु भिन्नवचनत्वादेकत्वाभावे कुटवृक्षवदित्युदाहरणमसङ्गत कुटश्च वृक्षश्च कुटवृक्षौ ताविव कुट-

वृक्षादिति, न ह्यत्र कश्चिद्वचनभेदोऽस्ति, सत्य, स्यादेतद्—यद्येकवचनान्तपदद्वयस्यात्र समासोऽभिप्रेत स्यात् किन्तु कुटश्च वृक्षौ चेति समस्य वति क्रियत इत्यस्ति वचनभेद ,ननु भवत्वेव तथाप्ययुक्तमिदमुदाहरण, नह्यत्र वचनाभेदेऽपि कुटवृक्षश ब्दयो पर्यायता युज्यते भिन्नजातीयवस्तुवाचकत्वात्, तथाहि—कुटशब्देन घट उच्यते वृक्षशब्देन तु शाखादिमान्पदार्थ तत्कुतो वचनाभेदेऽप्यनयो पर्यायशब्दता, नैव, भिन्नजातीयवस्तुवाचित्वादित्यस्यासिद्धत्वाद्, यत कौ-पृथव्यामटतीति व्युत्पत्ते कुटशब्देन वृक्ष एवात्र विवक्षित इत्यनयो पर्यायशब्दता, क्वचित्तु कूटवृक्षवदिति पाठस्तत्र निर्विवाद कूटशब्देन वृक्ष एवाभिधीयत इति, अस्माक तावदय सम्प्रदाय , सुधिया त्वन्यथापि भाव्यमिति । 'न स्थानभरणक्रिया'मिति ( २८४–२३ ), स्थानस्थस्यैव भरणक्रिया स्थानभरणक्रिया ता न विशेषयतीत्यर्थ , यदा स्थानस्थित एव जलादिना भ्रियते तदा घटो न भवति किन्तु योषिन्मस्तकारूढो जलाहरणचेष्टा कुर्वन्नेवेति भावार्थ । समासा नया । 'तद्व्यतिरेकेणे'त्यादि ( २८५–७ ), सूत्रार्थोपनिनद्धवस्तुव्यतिरेकेणाप्यर्थसम्भवादित्यर्थ , न ह्यभिलाप्यवस्तूनि सर्वाण्यपि सूत्रे निबद्धानि, तदुक्त—"पण्णवणिज्जा भावा अणतभागो उ अणभिलप्पाण । पन्नवणिज्जाण पुण अणतभागो सुअनिबद्धो ॥१॥" अत सूत्रा निनद्धवस्त्वपेक्षया युक्तोऽध्याहार इति, 'विस्तरेणे'ति विशेषयति, 'विरोधाविरोधे'त्यादि ( २८५–२१ ), नैगमस्य विशेषानभ्युपगच्छत सङ्ग्रहेण सह विरोध , सामान्याभ्युपगमेन त्वविरोध , व्यवहारस्यापि ऋजुसूत्रेण सार्द्ध विशेषाभ्युपगमेऽविरोधोऽक्षणिकवस्त्वनभ्युपगमेन तु विरोध इत्यादिको योऽसौ नयाना परस्पर विरोधाविरोधसम्भवविशेष स आदिर्यस्य शेषनयवक्तव्यताविस्तरस्य तेन विरोधाविरोधसभवविशेषादिना विस्तरेण नयानामपृथक्त्वे समवतार आसीदित्यर्थ । इतो

वैरस्वामिवक्तव्यता । 'अन्नाहिं महिलाही त्यादि ( २८९–१३ ), निकटगृहादिर्यात्तिनीभिरन्यस्त्रीभिरस्यामिमाताऽभिहिता–एन दारक एतस्मै स्वभर्त्रे साधुवेषधारिणे 'उविट्टेहि त्ति समर्पय 'ततो कहिं नेहिइ त्ति केन दारकस्त्वया अर्पितमसौ नेष्यति ? ततो निर्गतिकत्वात्त्वामेव प्रतिपत्स्यत इति भाव । 'अग्गोधार त्ति ( २९१–३ ), अह मनमपि व्याप्य धारा-तोयबिन्दुपरम्पराऽक्षणा यत्र तत्तथाभूत । 'एन्तगपी त्यादि एयतगपि घृ० ( २९१–१४ ), आगच्छ तमप्यालापकमुद्दिश्यो-पयनासे । 'सद्दपडिय'त्ति ( २९२–१ ), शब्द पतितो बृहत्त्वाद्व्यापितया सर्वदिक्षु यस्या सा तथा, बृहच्छब्देन नैरेधिरी चक्रुरित्यर्थ । 'उस्सारकप्पो'त्ति ( २९२–१३ ), यत्रैकस्मिन्नेव दिने बहुदिवसयोग्यसूत्रस्य वाचना दीयते स उत्सार कल्प । 'अब्भोग इयाए'त्ति ( २९३–१५ ), अभिमुखो निर्गत इत्यर्थ । 'तडिउ'त्ति ( २९५–१२ ), अभिधानमेत तस । 'तुब्भे गहेह'त्ति ( २९५–१३ ), ग्रथयत तावत्पुष्पाणि यूयमित्यर्थ ॥ इत आर्यरक्षितचरित—'तेहिं पार-द्धो'त्ति ( २०५–१३ ), राजा स्वल्पपरिवार आसीद्देवेन च पूर्वमेव बहुवस्तापसा विधुयिता आसन्नितिभाव । 'तपी ति ( ३००–१२ ), तस्य गृह वदन–तोरणमाला 'अग्घेण'त्ति ( ३००–१३ ), अक्षतपात्ररत्नादिना 'पज्जेण'ति प्रशस्तकुसु-ममिश्रजलादिना 'तेचि सुविणय'मित्यादि, ( ३०२–९ ) यथा–वैरस्वामिन्यध्ययनार्थमागते भद्रगुप्ताचार्या क्षीरभृत-निजपतद्ग्रहकमागन्तुकेन पीत ददृशुस्तथा वैरस्वाम्यपि स्वममद्राक्षीत्, केवल तेन किञ्चिदुद्धरित क्षीर दृष्ट यथा च भद्र-गुप्ताचार्य स्वमार्थ परिणमितस्तथा एभिरपीत्यर्थ । 'अज्जवइरा भणाती'त्यादि ( ३०२–१४ ) वैरस्वामिना आर्यरक्षित उक्त –कुरु त्व, किमित्याह—'जइत'त्ति, ननु जविक किमुच्यत इत्याह—'एअ परिकम्म एयस्स'ति यथा श्रीधरादि-

पाथ्या सङ्कलनादीनि परिकर्म्माणि तथा जविकान्यप्येतस्य दशमपूर्वस्य परिकर्मभूतानि, ततश्च जविकलक्षणपरिकर्म्मश्रुता
ध्ययन कुरु येन दशमपूर्वाध्ययनयोग्यो भवसीत्यर्थ । 'अहिगते'त्ति ( २०४-८ ), अधिगतजीवादितत्त्वा 'चिन्तेई'-
त्यादि सा श्राविका चिन्तयामास-मैव भवतु यदुत वयमत्र नगरे ऊर्जित-समाहात्म्य जीवित्वा ततो 'दहबलियाए'त्ति
( २०४-९ ), भिक्षया वृत्ति करिष्याम इति । 'जुयलएण कुडियाइ'त्ति ( २०५-२ ), कुण्डिया नाम शौचार्थं करप-
त्रिका तया युगलकेन च-अङ्गकच्छावन्धयोग्येनैकेनाथ परिधानेन द्वितीयेन तु प्रावरणेन सार्द्धं प्रव्रज्यामङ्गीकरोमीत्यर्थ ।
'वत्तीस सीसे'त्यादि ( २०७-२ ), द्वात्रिंशन्मोदकलाभनिमित्तसूचिता परम्परया युष्मत्सन्तानव्यवस्थापका द्वात्रिंश
च्छिष्या भविष्यन्तीति भाव । 'दइदिस'त्ति ( २०७-१२ ), उज्जयिन्या, 'सुत्तमडलीए'त्ति ( २०८-८ ) सूत्रपाठक-
यतिमण्डल्या । 'अइसय' गाहा 'साणुग्गहो' गाहा (२०८-२४), अत्र च द्वितीयगाथाया क्रिया, विष्वक्-पृथग् अकार्षी-
दार्यरक्षित इति प्रक्रमाद्गम्यते, कान् ?-अनुयोगान्-चरणकरणानुयोगादीन् केन ?-'कालियसुअ च इसिभासियाइ' इत्यादि-
गाथावक्ष्यमाणश्रुतविभागेन नयांश्च-नैगमादीन् अकार्षीदिति वर्त्तते, कथम्भूतान् ?-सुट्ठु निगूहितो-व्याख्यानिरोधेन छन्नी
कृतो विभागो येषा तांस्तथाभूतान्, किमर्थं ?-सुखग्रहणादिनिमित्त, आदिशब्दाद् धारणादिपरिग्रह , एतच्च कृतवान् कथ-
म्भूत ?-शिष्यान् प्रति सानुग्रह , कि कृत्वा ?-ज्ञात्वा क्षेत्रमित्यनुस्वारोऽलाक्षणिक क्षेत्रकालानुभाव आत्मव्यतिरिक्तश्चोप-
पुरुषांश्च मति -अर्थग्रहणविषया मेधा-सूत्राध्ययनविषया ताभ्या परिहीणान्, कथम्भूत सन्नेतज्ज्ञानातीत्याह-श्रुतातिशये
कृतोपयोग इति गाथाद्वयार्थ ॥ एवमनुयोगपृथक्करण नयाविभागकरणे च सामान्येनोक्तेऽपि कारणे पुनरपि नयाविभा

गकरणे विशेषत सविस्तर कारणमाह–'सविसये'त्यादि गाथाद्वय ( ३०८–१४ ), अस्य व्याख्या—इह शिष्यास्त्रिविधा – केचित्तुच्छमतयोऽपरिणतजिनवचनरहस्या अपरिणामा, परे त्वेकान्तक्रियाप्रतिपादकाद्येकनयमतवासितान्त करणा उत्सर्गे मोहितचेतसोऽतिपरिणामा, अन्ये तु मध्यस्थवृत्तय परिणतजिनवचस परिणामा इत्यभिधीयन्ते, तत्र ये अपरिणामास्ते नयाना य स्व स्व आत्मीयो विषयो ज्ञानमेव श्रेय इत्यादिस्तमश्रद्दधाना, ये त्वतिपरिणामास्तेऽपि यदेवैकेन नयेन ज्ञान प्रधान मुत्त्यङ्ग क्रिया वेत्यादि किञ्चिदुक्त तदेव तन्मात्र प्रमाणतया गृह्णन्त एकान्तनित्यानित्यवस्तुप्रतिपादकनयाना परस्पर विरोध मन्वाना मिथ्यात्व मा गमन्, येऽपि परिणामा उक्तस्वरूपास्ते यद्यपि मिथ्यात्व न गच्छन्ति तथापि विस्तरेण नयैर्व्याख्यायमानैर्ये सूक्ष्मविचारादयो बहवो भेदा भवन्ति तान् ग्रहीतुमशक्ता भवेयुरिति मत्वा आर्यरक्षितसूरिभि तत कालिके इत्युपलक्षणत्वात् सर्वस्मिन्नपि श्रुते नयविभागो–विस्तरव्याख्यारूपो न कृतः, तत प्रभृति निरुद्ध इत्यर्थ, इति गाथाद्वयार्थ ॥ 'न स्कन्धवद् बद्ध'मिति ( ३११–१५ ), यथाऽणुस्कन्धो निविडपरिणतिरूपतयाऽन्योऽन्याविभागेन बद्धो नैव कर्मेत्यर्थ । ननु बोटिका अपि निह्नवा एव तत्किमिति 'बहुरयपएसे'त्यादिगाथाया बहुरतजमालीत्यादिगाथाद्वये च तदुपन्यासो न कृत ?, विशेषणार्थखलुशब्दसूचितत्वेन प्राग्व्याख्याता एवेति चेत्, नैव, बहुरतादिवत् साक्षात्कस्मान्नोपात्ता ?, सत्य, किन्तु ये द्रव्यलिङ्गादिना किञ्चित्सादृश्य बिभ्रति त एवेहोपादेयत्वेनाभिमता, ये तु द्रव्यलिङ्गतोऽपि भिन्ना अतीव विसंवादिनो बोटिकास्ते भिन्नद्रव्यलिङ्गा मिथ्यादृष्टयो भेदेनैवाग्रे वक्ष्यन्ते, यद्येव निह्नवप्रभवनगरप्रतिपादकद्वारगाथाया किमिति तन्नगरोपन्यास इत्याशङ्क्याह—'वक्ष्यमाणभिन्नद्रव्ये'त्यादि ( ३१२–६ ), यदि पुनरिह

तन्नगराद्युपन्यासो न स्यात् तदा तद्वक्तव्यतावसरे द्वारगाथान्तर कर्त्तव्य स्याद्, अथैव ब्रूयात् कृतेऽप्यत्र तन्नगराद्युप-
न्यासे 'रहवीरपुर नगर दीवगमुज्जाण मित्यादिगाथास्तद्वक्तव्यतावसरे वक्ष्यन्त एव तत्किमत्र लाघवमिति[1], यद्येव बहुरता-
दिनपराणामपीहोपन्यासोऽनर्थकस्तद्वक्तव्यतावसरेष्वपि सविस्तर तन्नगरादेर्वक्ष्यमाणत्वाद्, विशेपविवरण वक्ष्यमाणमिति
चेद् अत्रापि तत्समानमित्यल प्रपञ्चेन । 'महातवोतीरप्पभ' इत्यादि ( ३१८-२ ), राजगृहाद्बहिर्वैभारगिरेनिकट
वर्त्ती पञ्चधनु शतायामविस्तरजलाशयाभिधानविशेपोऽयमिति भाव । 'दृष्टान्तोऽपि न साधनधर्मे'त्यादि ( ३२२-२ )-
जीवात्कर्म न वियुज्यते इत्यादौ प्रयोगे जीवस्य स्वकीयदेशा दृष्टान्त्वेनोपन्यस्तास्तेपु च यत्त्वया साधनत्वेनोपन्यस्तमन्योऽ-
न्याविभागेन युतत्व-मीलन परस्पर वन्ध इतियावत् तन्न सिद्ध, न हि ते जीवाच्छेदेन व्यवस्थिता सन्तोऽन्यत कुतश्चि
दागत्यान्योऽन्याविभागेन सम्बध्यन्ते, कुत इत्याह-तादूप्येण-एकत्र पिण्डीभूतत्वेन अनादिसिद्धत्वात्तेपा, स्वप्रदेशवत्
जीवात्कर्माप्यभिन्न भविष्यतीत्याह—'भिन्न चे'त्यादि ( ३२२-३ ) । यदशनादि निह्नवनिमित्त कृत तत्परित्यागे परि
भोगे वा भाज्यमितिव्याख्याद्वयेनोक्त, कथम्भूत पुनस्तदशनादीति दर्शयति—'तत्र भाज्य मूल'इत्यादि ( ३२५-२७ ),
अय च गाथावयव पक्षद्वयेऽपि समान इति व्याख्याद्वय कृत्वा पश्चाद्विवृत ॥ समासा निह्नवा' ॥ 'चतुर्थस्य चे'त्यादि
( ३२७-१५ ), रूपाणि-पुत्तलिकादीन्यजीवानि रूपसहगतानि तु-सचेतनस्त्र्यादीनि अथवा निर्भूपणानि-रूपाणि भूपणा-
वृतानि तु-रूपसहगतान्यभिधीयन्ते । 'स एव सामायिकादिर्गुण'इत्यादि ( ३२७-२३ ), पर्यायास्तिकमतेन हि द्रव्यस्या-
वास्तवत्वात्सर्वेऽपि पदार्था गुणरूपा एवेति प्रसङ्गत शेपपदार्था अपि सामायिकवद् गुणरूपा सेत्स्यन्तीति सर्वार्थसङ्ग्राह-

कमादिशब्द निर्दिशति, य एव द्रव्यास्तिकेन द्रव्यतयाऽभ्युपगत स एव सामायिकादिरर्थ पर्यायास्तिकमते गुण, अयञ्च गुणशब्दो गाथापर्यन्तादानीयात्र योज्यते आवृत्त्या स्वस्थानेऽपि योक्ष्यते, युक्तिमाह–यस्मात् 'जीवस्स एस गुणो त्ति व्यम्नेनाप्यनेनाधयनेन जीवस्य गुणो जीवगुण इति षष्ठीतत्पुरुषसमास सूचितो द्रष्टव्य, ततश्चेत्थ प्रयोगद्वारेण तात्पर्यमस्येय–इह यदेवोत्तरपदेन तत्पुरुषसमासे प्रतिपाद्यते तदेव परमार्थ, तद्यथा–तैलधारा, प्रतिपाद्यते च जीवगुण इति षष्ठीतत्पुरुषोत्तरपदेन सामायिकादिर्गुण तस्मात्स एव गुण परमार्थसन्, न पुनस्तदतिरिक्तो जीव, तस्य धारातिरिक्ततैलवत् तत्पुरुषपूर्वपदप्रतिपादितत्वेनौपचारिकत्वादितिभाव । 'अपर्याय'इत्यादि ( ३२८–१२ ), यद्यपर्याये परिज्ञा नास्ति तर्हि त एव पर्याया वस्तुसन्त एवेति पर्यायास्तिकेनोक्ते सत्याह—'न च ते पर्याया'इत्यादि (३२८–१३)। 'एकैकस्ये'त्यादि ( ३२८–२७ ), तत्र क्षपकश्रेणिप्रपन्नस्य चतुर्ष्वनन्तानुबन्धिषु मिथ्यात्वमिश्रपुञ्जद्वये च क्षपिते सम्यक्त्वपुञ्जस्यापि चरमपुद्गलग्रासक्षपणोद्यतस्य वेदकसम्यक्त्व विज्ञेय, सदनुष्ठानप्रवृत्तिं कारयतीतिव्युत्पत्ते कारकसम्यक्त्व सदनुष्ठानवता चारित्रिणा वेदितव्य, रोचयत्येव सदनुष्ठान न तु कारयतीति रोचक तत्त्वविरतसम्यग्दृष्टीना, व्यञ्जक दीपकमित्यनर्थान्तर, एतत्तु य स्वय मिथ्यादृष्टिरपि परेभ्यो जीवादीन् यथावस्थितान् व्यनक्ति तस्याङ्गारमर्दकादेर्द्रष्टव्य । ननु 'अज्झयणपि य तिविह' मित्यादिगाथायामध्ययनमेव व्याख्यास्यते तत्कथमुच्यते श्रुतसामायिक व्याचिख्यासुरित्याशङ्क्याह—'तस्याध्ययनरूपत्वा'दिति ( ३२९–८ ), अध्ययन श्रुतमित्येकार्थमित्यर्थ । 'साम्प्रत फलदर्शनद्वारेणे त्यादि ( ३२९–२१ ), परो–मोक्षस्तदर्थमिति वक्ष्यमाणफलप्रदर्शनद्वारेण 'अस्ये'ति सामायिकस्य करण–निर्वर्त्तन तस्य विधान कर्त्तव्यमेवेदमिति प्रतिपादयिष्यती

त्यर्थ । 'स्थूलसावद्ये'त्यादि ( ३३०–७ ), त्रिविध त्रिविधेनेति यद्भगवत्या श्रावकस्य प्रत्याख्यानमवाचि तद्राजान्त पुरि काद्यासेवनकाकमासभक्षणादिस्थूलसावद्ययोगविषय न पुनरेकेन्द्रियसङ्घट्टनादिसूक्ष्मसावद्ययोगविषयमिति । 'जइ किंचि' गाहा ( ३३०–७ ), न विद्यते प्रयोजन येन तदप्रयोजन–वलिभुक्पिशितादि अप्राप्य–मेरुशिर समुद्भूतचन्दनवृक्षादि यद्येवम्भूत किञ्चिद्वस्तु विशेष्य–तदाश्रित्येत्यर्थ त्रिविधत्रिविधेन प्रत्याचक्षीत श्रावको न कश्चिद्दोष, किंवत्?–स्वयम्भूर मणाश्रयमत्स्यवत्, यथा स्वयम्भूरमणमत्स्याना त्रिविधत्रिविधेन प्रत्याख्याति तथा यदि मध्यमखण्डवर्त्तिनामप्यत्यन्ताप्र योजनाप्राप्यवस्तूना त्रिविध त्रिविधेन प्रत्याचक्षीत तदा न कश्चिद्विरोध इति गाथार्थ । 'कर्मवेदक'इति ( ३३०–१२ ), एतावता ह्यशेन कृतसामायिक श्रावकोऽपि श्रमणवदुच्यते यतोऽसावपि तस्यामवस्थाया यथा श्रमणस्तथा प्रभूतकर्मवे दको भवतीति । 'क्षेत्रनियम त्वि'त्यादि ( ३३१–१० ), एतदुक्त भवति–'विरई मणुस्स लोए' इति ब्रुवता विरतिर्मनुष्य लोक एव भवतीति क्षेत्रनियम कृत, सर्ववाक्याना सावधारणत्वाद्, अय तु न युज्यते, यतो यदि देवापहारादितो मनुष्य लोकादर्द्धतृतीयद्वीपसमुद्रलक्षणाद् वहिनिर्गतस्य नन्दीश्वरादिशाश्वतप्रतिमादिदर्शनाद्विरतिलाभ स्यात् तदा किं क्षूयते येन मनुष्यलोकेन तल्लाभ नियमतीत्यभिप्रायवतोक्त 'विशिष्टश्रुतविदो विदन्ती'ति । 'तत्रैकैक प्रदेशो विदिक्ष्वि' त्यादि ( ३३१–१८ ), नन्वत्र यतो द्रव्याद् दशाना दिशा प्रभव उन्मीलितो भवति तद्द्रव्य दिक्त्वेन विवक्षित, तच्च त्रयोदशभिरेव प्रदेशैर्भवति न हीनाधिकैरित्यत्र का युक्तिरिति, उच्यते, इह मध्ये तावदेक परमाणुरवस्थाप्यते, त च यदा अपरे चत्वार परमाणवो वेष्टयन्ति तदा षण्णा दिशामेवोन्मीलना भवति न विदिशा, एकस्मात्परमाणोर्विदिगुत्थाना-

कमादिशब्द निर्दिशति, य एव द्रव्यास्तिकेन द्रव्यतयाऽभ्युपगत स एव सामायिकादिरर्थ पर्यायास्तिकमतेन गुण, अयत्र गुणशब्दो गाथापर्यन्तादानीयात्र योज्यते आवृत्त्या स्वस्थानेऽपि योक्ष्यते, युक्तिमाह–यस्मात् 'जीवस्स एस गुणो त्ति व्यस्तेनाप्यनेनावयवेन जीवस्य गुणो जीवगुण इति षष्ठीतत्पुरुषसमास सूचितो द्रष्टव्य, ततश्चेत्थ प्रयोगद्वारेण तात्पर्यमरमेय–इह यदेवोत्तरपदेन तत्पुरुषसमासे प्रतिपाद्यते तदेव परमार्थ, तद्यथा–तैलधारा, प्रतिपाद्यते च जीवगुण इति षष्ठीतत्पुरुषोत्तरपदेन सामायिकादिर्गुण तस्मात्स एव गुण परमार्थसन्, न पुनस्तदतिरिक्तो जीव, तस्य धारातिरिक्ततैलवत् तत्पुरुषपूर्वपदप्रतिपादितत्वनौपचारिकत्वादितिभाव। 'अपर्याय इत्यादि (३२८–१२), यद्यपर्याय परिज्ञा नास्ति तर्हि त एव पर्याया वस्तुसन्त एवेति पर्यायास्तिकेनोक्ते सत्याह—'न च ते पर्याया'इत्यादि (३२८–१३)। 'एकैकस्ये'त्यादि (३२८–२७), तत्र क्षपकश्रेणिप्रपन्नस्य चतुर्ष्वनन्तानुबन्धिषु मिथ्यात्वमिश्रपुञ्जद्वये च क्षपिते सम्यक्त्वपुञ्जस्यापि चरमपुद्गलग्रासक्षपणोद्यतस्य वेदकसम्यक्त्व विज्ञेय, सदनुष्ठानप्रवृत्तिं कारयतीतिव्युत्पत्ते कारकसम्यक्त्व सदनुष्ठानयता चारित्रिणा वेदितव्य, रोचयत्येव सदनुष्ठान न तु कारयतीति रोचक तत्त्वविरतसम्यग्दृष्टीना, व्यञ्जक दीपकमित्यनर्थान्तरं, एततु य स्वय मिथ्यादृष्टिरपि परेभ्यो जीवादीन् यथावस्थितान् व्यनक्ति तस्याङ्गारमर्दकादेर्द्रष्टव्य। ननु 'अज्झयणपि य तिविह' मित्यादिगाथायामध्ययनमेव व्याख्यास्यते तत्कथमुच्यते श्रुतसामायिक व्याचिख्यासुरित्याशङ्क्याह—'तस्याध्ययनरूपत्वा'दिति (३२९–८), अध्ययन श्रुतमित्येकार्थमित्यर्थ। 'साम्प्रत फलदर्शनद्वारेणे त्यादि (३२९–२१), परो–मोक्षस्तदर्थमिति वक्ष्यमाणफलप्रदर्शनद्वारेण 'अस्ये'ति सामायिकस्य करण–निर्वर्त्तन तस्य विधान कर्त्तव्यमेवेदमिति प्रतिपादयिष्यती

इति ( ३३३–६ ), सामान्यतो न विशेषत प्रतिक्षण सर्वभावानामपचीयमानत्वादिति । 'षड्विध'इत्यादि ( ३३३–१४ ), न चात्र दुष्पमदुष्पमायामत्यन्तक्लिष्टत्वाद्बिलवासिषु सामायिकाभाव आशकनीयो, यत प्रज्ञप्त्यामप्युक्त–'उस्सन्नं धम्मसन्नपरिवज्जिय'त्ति उसन्नमिति प्रायोग्रहणेन ज्ञायते सम्यक्त्वमात्रप्रतिपत्ता कश्चिद्भवत्यपि । 'द्विविधस्य दर्शनचारित्रसामायिकस्य शैलेशी'इत्यादि ( ३३४–१६ ), ननु यथाऽस्य तथा सिद्धस्यापि पूर्वप्रतिपत्तिमङ्गीकृत्य सम्यक्त्वसायिक विद्यते तत् किमिति सिद्धस्य चतुर्णामपि निषेध ?, सत्य, किन्तु सम्यक्त्ववर्जसामायिकत्रय ससारस्थानामेव सम्भवति तत्साहचर्यात्सम्यक्त्वसामायिकमपि ससारिणा सम्बन्धि विचार्यते, तथाभूत तु सिद्धे नास्तीति निषिध्यत इति न दोष । 'जघन्यस्थितिकर्म्मबन्धकत्वादि'ति ( ३३५–१२ ), एतदुक्त भवति–येन केनचिन्न्यायेनेह लघ्वी स्थितिर्लभ्यते तथा गृह्यते, ततश्च यद्यपि कश्चित्क्षपकादि शुभाध्यवसायत सत्कर्मस्थिति लघु करोति तथापि तत्कालबन्धस्थित्यपेक्षया सत्कर्म्मस्थितिर्बृहत्तरैव भवति, अतो जघन्यपदे विचार्ये बन्धस्थितिर्गृह्यते न तूपात्तसत्कर्म्मस्थितिरिति भाव , ननु तथाप्यन्तकृत्केवली यो भविष्यतीति किमिति स एवेह गृहीत इति चेद्, उच्यते, अय ह्येकहेलयैव समस्तकर्म्मक्षय कृत्वा झगित्येन मोक्षलक्ष्मीं प्राप्स्यतीति शेषक्षपकेभ्यो विशुद्धाध्यवसायत्वादतिलघुतरस्थितिबन्धक इति विशेपतो गृह्यते, नन्वनिवृत्तिबादरादारभ्य सर्वेऽपि क्षपकास्तुल्यपरिणामा इत्यागम ततो व्यर्थ विशेषग्रहणमिति चेत्, सत्य, किन्त्वस्त्यपूर्वकरणे क्षपकाणामपि परस्पर विशेषोऽसङ्ख्येयलोकाकाशप्रमाणाध्यवसायस्थाननिष्पन्नत्वात्तस्य, अत एवोक्त 'दर्शनसप्तकातिक्रान्त' इति दर्शनसप्तकातिक्रान्तो ह्यपूर्वकरणादारभ्य प्राप्यते, अपूर्वकरणे च या काश्चित्कर्म्मप्रकृतयो बन्धे व्यवच्छिद्यन्ते तासा

भावात् पड्दिक्सम्बन्धस्यैव परमाणोरभिधानाद् 'एगपएसोगाढ सत्तपएसा य से फुसणा' इति वचनाद् यदि हि परमाणो-
विदिक्सम्बन्ध स्यात्तदा एकादशप्रदेशैव स्पर्शना स्यात् न सप्तप्रदेशेति भाव, तस्मान्न पञ्चभि प्रदेशैर्दिग्रूपस्पर्शना
भवति, नवभिरपि न भवति, ये ह्यपरे दिक्षु चत्वार परमाणवो व्यवस्थाप्यन्ते तै पुनरपि दिश एवोत्तिष्ठन्ति न विदिश
कोणानामन्तनिविष्टत्वाद् अतो विदिगुन्मीलनार्थमपरेऽपि चत्वार कोणेषु व्यवस्थाप्यन्ते इति दशदिक्प्रभव क्षेत्र त्रयोद
शभि खाणुभिर्भवतीति न हीनाधिकैरिति स्थापना ( ३३१ ) परमार्थतश्चैतस्यैवावधारणीया, वृत्तिकृता तु तदुपदर्शनाग्र-
हाग्रहशिष्यावबोधार्थमेवासौ दर्शिता यथावदस्या दर्शयितुमशक्यत्वात् अम्भुद्धा या प्राक्षेरिति । 'दो चेव य होंति रुअ-
गनिभ'त्ति ( ३३१–२५ ), रुचको नाम गोस्तनाकारो अष्टाकाशप्रदेशनिष्पन्नो यतो दिश प्रभवन्ति तत्सदृशमूर्द्धाधो-
दिग्द्वय भवतीतिभाव । 'देशविरतिसर्वविरतिसामायिकयोस्त्वि'त्यादि ( ३३२–१८ ) ननु चाधस्तनभूमिकाया प्रज्ञा-
पके धर्मं कथयति उपरितनभूमिकायामधस्ताद्वा व्यवस्थित सम्भवति सर्वदेशविरत्यो कश्चित्प्रतिपत्ता, तथा तापदिग
प्यादित्यापेक्षैव तत सवितुरप्यूर्द्धाधस्तत्सम्भवो घटत एवेति किमित्येव नियमो, नैतदेव, यतो देशसर्वविरती विशिष्टगुण-
रूपे न विशिष्टविनयमन्तरेण प्राप्येते यस्तु प्रज्ञापकशिरस्यधोभागे वाऽत्यन्तसमश्रेणितया वर्त्तते स प्रज्ञापकाज्ञाकारि-
त्वात्कथ तदवाप्तिभाग् भवेत्?, सम्यक्त्वश्रुतसामायिकयोस्तु देवनारका प्रतिपत्तार संभवन्ति अत्यन्तव्यवहितत्वेनाशातना-
भावाद्, आदित्यस्याप्यूर्द्धाधोदिग्द्वयेऽत्यन्तसमश्रेणिव्यवस्थितसर्वदेशविरतिप्रतिपत्त्रोर्मनुष्यतिरश्चो सूक्ष्मेक्षितया विचार्यमा
णयोरसम्भव एव लक्ष्यतेऽत एव प्रतिषेधादिति तावदस्माकं सम्प्रदायः, सूक्ष्मधिया त्वन्यथाऽपि भाव्यमिति । **'प्रथाहत'**

अन्तरकरणे च वर्त्तमान सम्यक्त्वश्रुतसामायिके समकालमेव कश्चिदतिशुद्धत्वादेशविरतिमपरस्त्वतिविशुद्धतरत्वात्सर्वविरतिं तत्समकालमेव प्रतिपद्यत इति प्रथमौपशमिकसम्यक्त्वलाभकालेऽवस्थितपरिणामस्यानाकारोपयोगिनोऽपि चत्वार्यपि सामायिकानि सम्भवन्तीति न कश्चिद्विरोध । अथ कोऽयमुपशमसम्यग्दृष्टिरित्याह—'ऊसरदेसे'त्यादि गाथा अतिप्रसिद्धत्वान्न विव्रियन्ते, भवत्येवम्भूत उपशमसम्यग्दृष्टि , अवस्थितपरिणामता तु कथमस्येत्याह—'ज मिच्छस्से'त्यादिगाथा ( ३३६–२० ), अस्या व्याख्या—यद्-यस्मात्कारणान्मिथ्यात्वस्यानुदयोऽतो न हीयते तस्य परिणामोऽन्तरकरणे वर्त्तमानस्य, हानिकारणमिथ्यात्वपुञ्जस्यानुदयाद्, वर्धतां तर्हीति चेदित्याह–यद्–यस्मात् तत्र वर्त्तमानस्य यद्दर्शनमोहलक्षण सत्कर्म तदुपशान्तमतो न परिणामस्य वृद्धिरपि, अनिवृत्तिकरणे हि वर्त्तमानस्य मिथ्यात्वस्योपशमार्थ प्रतिक्षणमासीत् तस्य परिणामवृद्धि , अन्तरकरणे तु प्रविष्टस्योपशमनीयाभावाद्दाह्याभावे वह्नेरिव कुतस्तस्य परिणामस्य वृद्धि ?, यत एव न हीयते नापि वर्द्धते तत्परिणामस्तेन कारणेनावस्थित इति गाथार्थः। 'अन्यथे'त्यादि ( ३३७–१० ), एतदुक्त भवति–प्रकरणादनुवर्त्तमान चतुर्विधमपीह सामायिक सम्बध्यते, अन्यथा–यदि तत्सम्बन्धो नाभिप्रेत स्यात्तदा सामान्येन नारकादयोऽपि द्वे त्रीणि वा सामायिकानि लभन्त एवेति किमर्थं 'उक्कोसजहन्न वज्जिऊणे'त्यादि विशेषतो मनुष्यग्रहणगर्भमुत्तरार्द्ध कुर्यात्, सामान्यजीवाश्रितावगाहनाविचार एव हि कृत स्याद्, विशेषतो मनुष्याश्रयावगाहना विचारयति चेत्तत्सात्मकृतसामायिकचतुष्टयसम्बन्ध एवाभिप्रेत इति निश्चेतव्यम् । 'मतिश्रुतज्ञानलाभचिन्तायामि'त्यादि ( ३३८–७ ), अयमत्र भावार्थ –पूर्व ज्ञानपञ्चकविचारे मतिश्रुतज्ञानयो शुद्धास्वेव तिसृषु लेश्यासु लाभ उक्त इदानीं तु 'सम्मत्तसुअ

मसौ शेषक्षपकेभ्यो जघन्यस्थितिबन्धको भवतीति युज्यत एव विशेषग्रहण, भवत्वेव तथापि समुत्पन्नकेवलज्ञानाद्यन्त्योऽन्तकृत्केवली सामान्यत किन गृह्यते येन विशेषणद्वयमुपादीयते दर्शनसप्तकातिक्रान्त क्षपक इति चेत्, सत्य, किन्त्वति क्रान्तदर्शनसप्तकक्षपकावस्थयोरेव कर्मसप्तकस्य जघन्यो बन्ध प्राप्यते नान्यत्र, तथाहि—अक्षीणदर्शनसप्तकस्य तादृग्मन्दाध्यवसायत्वादेव न जघन्यबन्धसम्भव, क्षपकावस्थोत्तीर्णस्यापि क्षीणमोहस्योत्पन्नकेवलस्य वा कर्म्मसप्तकबन्धस्यैवाभावान्न तज्जघन्यबन्धसम्भव इति विशेषणद्वयाददोष । 'देशविरतिसामायिक त्वि'त्यादि ( ३३६–४ ), एतदुक्त भवति देवनारकयतिश्रावकाश्चत्वारोऽवधिस्वामिन, तत्राद्यत्रयस्य देशविरतिप्रतिपत्त्यसम्भव एव, श्रावकोऽप्यवधिज्ञान प्राप्य देशविरति प्रतिपद्यते इत्येव न, किन्तु पूर्वमभ्यस्तदेशविरतिगुण पश्चादवधिं प्रतिपद्यते, कुत इत्याह—देशविरतिलक्षणगुणपूर्वकत्वात्तदवाप्ते—अवध्याप्तेरित्यर्थ, अन्ये त्वन्यथाऽप्यत्र व्याचक्षते, तत्त्व तु केवलिनो विदन्तीति । 'प्रवर्द्धमानपरिणामे'त्यादि ( ३३६–१७ ), अयमत्र भावार्थ—यथा 'सव्वाओ लद्धीओ सागारोवओगे'त्यादिक आगम तथा 'उवओगदुगम्मि चउरो पडिवज्जे'इत्ययमप्यागम एव अत परस्परप्रतिसाद्धिसैद्धान्तिकवचसा विषयव्यवस्था न्याय्या, सा चेय—या सम्यक्त्व लब्ध्वा मिथ्यात्व गताना पुनरपि कुतश्चिच्छुभोदयात्प्रतिक्षण वर्द्धमानाध्यवसायबला सम्यक्त्वचारित्रादिलब्धयो भवन्ति ता साकारोपयोगोपयुक्तस्य द्रष्टव्या, यास्तु प्रथमसम्यक्त्वलाभकालेऽन्तरकरणप्रविष्टस्यावस्थिताध्यवसायस्य सम्यक्त्वादिलब्धयो भवन्ति ता अनाकारोपयोगेऽपि भवन्ति न कश्चिद्दोषो, न चैता अनाकारोपयोग एव भवन्तीति नियमो विज्ञेय, उपयोगद्वयेऽप्येतासा सभवात्, केवलमनाकारोपयोगे यदा भवन्ति तदा 'उवओग म्मी'त्या त्र चरितार्थ भवति

अन्तरकरणे च वर्त्तमान सम्यक्त्वश्रुतसामायिके समकालमेव कश्चिदत्तिशुद्धत्वाद्देशविरतिमपरस्त्वतिविशुद्धतरत्वात्सर्वविरतिं तत्समकालमेव प्रतिपद्यत इति प्रथमौपशमिकसम्यक्त्वलाभकालेऽवस्थितपरिणामस्यानाकारोपयोगिनोऽपि चत्वार्यपि सामायिकानि सम्भवन्तीति न कश्चिद्विरोध । अथ कोऽयमुपशमसम्यग्दृष्टिरित्याह—'ऊसरदेसे'त्यादि गाथा अतिप्रसिद्धत्वान विविध्रियन्ते, भवत्येवम्भूत उपशमसम्यग्दृष्टि , अवस्थितपरिणामता तु कथमस्येत्याह—'ज मिच्छस्से'त्यादिगाथा ( ३३६–२० ), अस्या व्याख्या—यद्–यस्मात्कारणान्मिथ्यात्वस्यानुदयोऽतो न हीयते तस्य परिणामोऽन्तरकरणे वर्त्तमानस्य, हानिकारणमिथ्यात्वपुञ्जस्यानुदयाद्, वर्धतां तर्हीति चेदित्याह–यद्–यस्मात् तत्र वर्त्तमानस्य यद्दर्शनमोहलक्षण सत्कर्म तदुपशान्तमतो न परिणामस्य वृद्धिरपि, अनिवृत्तिकरणे हि वर्त्तमानस्य मिथ्यात्वस्योपशमार्थ प्रतिक्षणमासीत् तस्य परिणामवृद्धि , अन्तरकरणे तु प्रविष्टस्योपशमनीयाभावाद्दाह्याभावे वह्नेरिव कुतस्तस्य परिणामस्य वृद्धि ?, यत एव न हीयते नापि वर्द्धते तत्परिणामस्तेन कारणेनावस्थित इति गाथार्थ । 'अन्यथे'त्यादि ( ३३७–१० ), एतदुक्त भवति–प्रकरणादनुवर्त्तमान चतुर्विधमपीह सामायिक सम्बध्यते, अन्यथा–यदि तत्सम्बन्धो नाभिप्रेत स्यात्तदा सामान्येन नारकादयोऽपि द्वे त्रीणि वा सामायिकानि लभन्त एवेति किमर्थं 'उक्कोसजहन्न वज्जिऊणे'त्यादि विशेपतो मनुष्यग्रहणगर्भसुत्तरार्द्ध कुर्यात्, सामान्यजीवाश्रितावगाहनाविचार एव हि कृत स्याद्, विशेपतो मनुष्याश्रयावगाहना विचारयति चेत्तसात्प्रकृतसामायिकचतुष्टयसम्बन्ध एवाभिप्रेत इति निश्चेतव्यम् । 'मतिश्रुतज्ञानलाभचिन्तायामि'त्यादि ( ३३८–७ ), अयमत्र भावार्थ –पूर्वं ज्ञानपञ्चकविचारे मतिश्रुतज्ञानयो शुद्धास्वेव तिसृषु लेश्यासु लाभ उक्त इदानीं तु 'सम्मत्तसुअ

मसौ शेषक्षपकेभ्यो जघन्यस्थितिबन्धको भवतीति युज्यत एव विशेषग्रहण, भवत्वेव तथापि समुत्पन्नकेवलज्ञानाद्यवस्थोऽन्तकृत्केवली सामान्यत किन्न गृह्यते येन विशेषणद्वयमुपादीयते दर्शनसप्तकातिक्रान्त क्षपक इति चेत्, सत्य, किन्त्वेतिका तद्दर्शनसप्तकक्षपकावस्थयोरेव कर्मसप्तकस्य जघन्यो बन्ध प्राप्यते नान्यत्र, तथाहि—अक्षीणदर्शनसप्तकस्य तावन्मन्दाध्यवसायत्वादेव न जघन्यबन्धसम्भव, क्षपकावस्थोत्तीर्णस्यापि क्षीणमोहस्योत्पन्नकेवलस्य वा कर्मसप्तकबन्धस्यैवाभावान्न तज्जघन्यबन्धसम्भव इति विशेषणद्वयाददोष । 'देशविरतिसामायिक त्वि'त्यादि ( ३३६–४ ), एतदुक्त भवति देवनारकयतिश्रावकाश्चत्वारोऽवधिस्वामिन, तत्राद्यत्रयस्य देशविरतिप्रतिपत्त्यसम्भव एव, श्रावकोऽप्यवधिज्ञान प्राप्य देशविरति प्रतिपद्यते इत्येव न, किन्तु पूर्वमभ्यस्तदेशविरतिगुण पश्चादवधि प्रतिपद्यते, कुत इत्याह—देशविरतिलक्षणगुणपूर्वकत्वात्तदवाप्ते —अवध्यवाप्तेरित्यर्थ, अन्ये त्वन्यथाऽप्यत्र व्याचक्षते, तत्त्व तु केवलिनो विदन्तीति । 'प्रवर्द्धमानपरिणामे'त्यादि ( ३३६–१७ ), अयमत्र भावार्थ —यथा 'सव्वाओ लद्धीओ सागारोवओगे'त्यादिक आगम तथा 'उवओगदुगम्मि चउरो पडिवज्जे'इत्ययमप्यागम एव अत परस्परप्रतिषिद्धसैद्धान्तिकवचसा विषयव्यवस्था न्याय्या, सा चेय—या सम्यक्त्व लब्ध्वा मिथ्यात्व गताना पुनरपि कुतश्चिच्छुभोदयात्प्रतिक्षण वर्द्धमानाध्यवसायवता सम्यक्त्वचारित्रादिलब्धयो भवन्ति ता साकारोपयोगोपयुक्तस्य द्रष्टव्या, यास्तु प्रथमसम्यक्त्वलाभकालेऽन्तरकरणप्रविष्टस्यावस्थिताध्यवसायस्य सम्यक्त्वादिलब्धयो भवन्ति ता अनाकारोपयोगेऽपि भवन्ति न कश्चिद्दोषो, न चैता अनाकारोपयोग एव भवन्तीति नियमो विज्ञेय, उपयोगद्वयेऽप्येतासा सभवात्, केवलमनाकारोपयोगे यदा भवन्ति तदा 'उवओगदुगम्मी'त्यादि सूत्र चरितार्थ भवति,

तत्, तदाह—'उक्त चे'त्यादि ( २३८–१० ), अत्र च कृष्णलेश्याया 'उस्सक्कइ वा' इतीयानेव पाठो भवति यत्पुन 'क्वचिद् अवसक्कइ वा' इत्येतदपि दृश्यते तदशुद्धमेव, यत इह मध्यमाश्चतस्रो लेश्या उत्तरपूर्वलेश्यासङ्क्रमे सति यथाक्रममुत्सर्प्पन्ति अवसर्प्पन्ति च, आद्यायास्तूत्तरोत्तरापेक्षयोत्सर्प्पण स्याद् अवसर्प्पण तु तदधस्ताल्लेश्याभावादेव न भवति, चरमायास्त्वव सर्प्पणमेव नोत्सर्प्पण, तदुपरिलेश्याभावादिति, तस्मात्स्थितमेतत्—पूर्वं भावलेश्यापेक्षया विशुद्धलेश्यात्रये तल्लाभ उक्त इदानी त्ववस्थितद्रव्यलेश्यापेक्षयेति । 'किं तदिति तत्र सामायिकजातिमात्रमि'त्यादि ( २४१–१ ), एतदुक्त भवति–पूर्वं सामायिकजातिमात्रस्वरूपमेव परेण जिज्ञासितमत किं सामायिकमिति सामान्यप्रश्ने प्रवृत्ते तत्राचार्येणोक्त 'आया खलु सामइअ पच्चक्खायतओ भवइ आया' विषयस्तु सामायिकस्य तत्र परेण न पृष्ट केवल विषयिण्यपि परेण जिज्ञासिते विषयविषयिणोरभेद चेतसि व्यवस्थाप्योत्तरार्द्धेनोक्तो विषय आचार्येण–'स खलु पच्चक्खाण आवाए सव्वद्व्वाण'त्ति, तथा 'पढमम्मि सव्वजीवा' इत्यादिना च, तस्मात्सामायिकमेव पूर्वं ज्ञेयभावेनोक्त न विषय तस्य परेणाजिज्ञासितत्वाद्, यत्त्वस्य पूर्वमभिधान तद्विषयविषयिणोरभेदेन सामायिकस्यैव स्वरूपाभिधानमितिभावनीय, इह पुन सामायिकस्यैव विषयाभिधा नमिति सम्बन्ध, केन ?–ज्ञेयभावेन, केषु विषयभूतेषु सामायिक भवतीति विषयस्यैव परेण पृष्टत्वान्मुख्यतया तत्परिज्ञान-भावेन पूर्वं तु गौणभावेनेति तात्पर्यार्थ । 'इह णेयभावओभिहिय'त्ति ( २४१–२ ), इह केष्विति द्वारे सामायिक मभिहित ज्ञेयभावेन विषयस्येति द्रष्टव्य, पाठान्तर वाऽत्र दृश्यते 'इह नेयभावओऽभिहिउ'त्ति तत्राप्ययमेवार्थ –इह मुख्य तया ज्ञेयभावेन विषयोऽभिहित पूर्वं तु किं सामायिकमित्येव परेण पृष्टत्वात्सामायिकमेव ज्ञेयभावेनोक्त विषयस्तु विषयिण

सर्वासु लहइ'त्ति अनेन लेश्याषट्केऽपि तल्लाभ उच्यते इति कथ न पूर्वापरविरोध इति, अत्रोत्तरमाह—'उच्यते' इत्यादि (३३८-८), इयमत्र भावना–इह मनुष्याणा द्रव्यलेश्यादयोऽपि प्रत्यन्तर्मुहूर्त्तमपरापरा एव भवन्त्यतस्तेषा द्रव्यतो भाव तश्च विशुद्धलेश्यात्रयोदय एव सम्यक्त्वादिलाभो, देवनारकाणामपि भावतोऽपि शुद्धलेश्यात्रयोदय एव, द्रव्यतस्तु लेश्या षट्कान्यतरलेश्योदयेऽपि सम्यक्त्वादिप्राप्ति स्यादेव, तेषा हि 'काऊ काऊ तह काऊनील' इत्यादिना आगमेन या द्रव्यलेश्या प्रतिपाद्यन्ते ता आमरणान्तमवस्थिता एव न परावर्त्तन्ते, ननु द्रव्यलेश्या भावलेश्योपष्टम्भकर्त्री भवति, ततश्चाध सप्तमपृथ्वीनारकादीना सङ्क्लिष्टकृष्णलेश्याद्युदये सदावस्थिते सति कुतो विशुद्धभावलेश्यासम्भव इति चेद्, उच्यते, तेषा हि गिरिसरिदुपलघोलनवैचित्र्यन्यायात् केनचिच्छुभोदयेन सत्यपि कृष्णलेश्याद्युदये शुक्लाद्यन्यतरविशुद्धलेश्याद्रव्याण्याक्षिप्यन्ते तै शुक्लाद्यन्यतरभावलेश्या नारकादेरपि जन्यते, तानि च शुक्लाद्यन्यतरलेश्याद्रव्याणि प्राप्य न कृष्णादिलेश्या सर्वथा स्वरूप परित्यज्य तद्रूपतया परिणमति किन्तु तदाकारमात्रं तत्प्रतिबिम्बमात्र वा स्वीकुरुते, यथा हि दूरव्यवस्थिते जपाकुसुमे रक्तप्रभारूपमाकारमात्र दर्पणे सङ्क्रामति, तस्मिन्नेवात्यन्तसविधीभूते स्पष्ट तत्प्रतिबिम्बमादर्शे सङ्क्रामति, न चासौ सर्वस्वरूपपरित्यागेन जपाकुसुमरूपो जात इति वक्तु शक्यते, तद्वदिहापि जीवस्य शुद्धाध्यवसायाकृष्टेषु शुक्लाद्यन्यतरलेश्याद्रव्येषु प्रथम मन्दानुभावेषु कृष्णादिलेश्या तत्सम्बन्ध्याकारमात्र प्रतिपद्यते पुनस्तेष्वेव प्रकर्ष गच्छत्सु तत्प्रतिबिम्बमङ्गीकरोति तदनुरूपानुभावमात्र प्रतिपद्यते येन सम्यक्त्वादिलाभघातेऽसमर्था भवति न पुन सर्वथा तद्रूपता स्वीकरोति दर्पणवदिति भाव, ननु कृष्णादिद्रव्यलेश्योदये सति किमन्यलेश्याद्रव्याण्याक्षिप्यन्ते येनेत्थमुच्यते?, सत्यमेवै

'मूयपुव्वो'त्ति ( ३५२–५ ) ऋद्धिर्भूता पूर्वं यस्य स तथेति सापेक्षस्य समास, पूर्वमसावपीश्वर आसीदिति मत्वा लोक-
स्तस्मै स्निग्धभिक्षादिकं ददाति। 'मा अण्णस्स खण'मित्यादि ( ३५२–११ ) त्वद्व्यतिरिक्तान्यदत्ता भिक्षा मया
ग्रहीतव्येत्येवम्भूत क्षणो–नियमो न त्वया ग्राह्यो, मदीयैव भिक्षा ग्राह्या नान्यस्येति भाव। 'लद्धा सुइ'त्ति ( ३५३–२ )
लब्ध सद्बोध इत्यर्थ। 'ताहे सो चोरिय'मित्यादि ( ३५४–१ ), केनोपायेन निष्कासित इति चेद्, उच्यते, तया
कुट्टिन्या स प्रोक्त इद गृहमभ्यन्तरतो गोमयादिना सज्यते त्वमभ्यन्तरापवरकाद्बहिस्तात्पट्टशालाया भव, ततोऽपि भूमि-
प्रमार्जनादिव्याजेन परत क्षिप्तस्ततोऽपि परतस्तावद् यावत्खडिक्किकाया बहि प्रक्षिप्य दास्याऽभिहितोऽसौ–किमद्याप्यत्र
तिष्ठसि निष्कासितस्त्व, गच्छ यथेप्सितप्रदेशमित्ययमत्र भावार्थ इति। 'ताओ न तरति धरिउ'ति (३५४–१०) यद्यपि
प्ररूढस्नेहतया ताश्चतस्रो वध्वस्त धर्तुमिच्छन्ति तथापि लब्धप्रतिष्ठश्वश्रूजनेन निष्कास्यमानत्वान्न शक्नुवन्ति धर्तुमिति
भाव। 'सव्ववेयालिउ'त्ति ( ३५५–६ ) सर्वाण्येव वेलाकूलान्युपलक्षणत्वादन्यानि चावस्थानयोग्यानि स्थानानि निरी
क्षितानि। 'बालाणि'त्ति ( ३५६–१२ ) दुहिता पुत्रश्च बालत्वे वर्त्तमानत्वान्नाद्यापि परिणयनमनुभवत इति भाव।
'ओहाडिउ'त्ति ( ३५८–७ ) वस्त्रादिना आच्छादित इत्यर्थ। 'वसासिहरे अट्ठ कट्ठ'मित्यादि ( ३६०–४ ), वश-
शिखरे तिर्यक्काष्ठं व्यवस्थाप्यते तस्य काष्ठस्योभयपार्श्वयोर्द्वे २ कीलिके व्यवस्थाप्येते, तत्रेय स्थापना— ॥ ⊥ ॥
ततश्च इलापुत्र पादुके चरणयो परिदधाति, ते च पादुके मध्यतलप्रदेशे एकैकच्छिद्रयुक्ते, ततोऽसौ खड्गखेटकव्यग्रहस्त-
स्तिर्यक्कृतकाष्ठमध्यप्रदेशे स्थित्वा आकाशतलमुत्प्लुत्य सप्ताग्रतोमुखानि सप्त पश्चान्मुखानि प्रस्तावात्करणानि दत्त्वा ते

सामायिकादभिन्न इति मत्वा परेणाजिज्ञासितोऽपि तत्रोक्त इति न ज्ञेयभावेनोक्त इति व्यपदिश्यतेऽत्र तु तथा व्यपदिश्यत एव परेण जिज्ञासितस्योक्तेरित्यल प्रसङ्गेन । 'करचोल्लुण'त्ति ( ३४१–१९ ), कर –अवश्य देय चोल्लको देशीवचनत्वाद्भोजनवाचकस्ततश्च कररूपश्चोल्लक करचोल्लक । 'दव्वाइजहोवायाणुरूवपडिवत्तिया नीइ'त्ति ( ३४७–२ ), द्रव्यादिष्वित्यादिशब्दात्क्षेत्रकालभावपरिग्रहस्तेषु द्रव्यादिषु इद द्रव्य–वस्त्रादि इत्थं ग्राह्य अनयो क्षेत्रकालयोरित्थमुत्सर्गेणापवादेन वा धर्मकथा कार्या ग्लानादिभावयुक्तस्य चेत्थमुपचरणीयमित्यादिरूपो योऽयमुपायो यथोपाय तस्यानुरूपा प्रतिपत्तिः–परिज्ञान तस्या–द्रव्यादियथोपायानुरूपप्रतिपत्तौ वर्त्तितु शील यस्य तस्य भाव सत्ता सा नीतिरुच्यते । 'करण सहण चे'त्यादि ( ३४७–३ ), गाथार्द्ध, करण तपसि सहन चोपसर्गेष्विति यथासङ्ख्यमत्र सम्बन्ध, कस्या? दुर्गापदि एष व्यवसाय, एतदुक्त भवति–दुर्गापत्पतितस्यापि दृढधृतितया यत्तपस करण–विधान उपसर्गाणा चाक्षोभ्यतया यत्सहन स व्यवसाय उच्यते ॥ 'श्रुते च अवाप्यत्त' इति ( ३४७–८ ), आनन्दकामदेवाभ्या श्रीमन्महावीरसमीपे सविस्तर धर्म्म श्रुत्वा सामायिकमवाप्तमित्यर्थ । 'यथाऽङ्गर्षिणे'ति ( ३४७–१० ), अस्य च कथानक 'चपाए कोसिअज्जरिसी रुद्दए अ आणत्ती' त्यादिना योगसङ्ग्रहेषूपरिष्टाद्वक्ष्यते । 'एस पुन वेअरणी'त्यादि ( ३४८–२ ), कालिञ्जरो नाम जनपदाधिष्ठितपर्वतस्तस्य वर्त्तिन्या–मार्गे गङ्गाविन्ध्यपर्वतयोर्मध्य उत्पत्स्यत इत्यर्थ । 'कहिय जह एगा देवी'त्यादि ( ३५०–८ ), युष्मदन्त पुरे विद्यते काचिदेवविधाऽकार्यकारिणी राज्ञी पर रात्रौ सान्धकारप्रदेशे दृष्टत्वान्न ता सम्यगुपलक्षयामीति राज्ञे कथितमित्यर्थ । 'सोवि चोरो'इत्यादि ( ३५१–३ ), भूमौ लुठन् कथमपि तस्या स्पर्श ज्ञातवानित्यर्थ ।

चात्त्वादिति भाव । 'देवोवि मेत'मित्यादि ( ३६८–३ ), तेन देवेन मेतार्यप्रतिवोधनार्थं स मातङ्गोऽधिष्ठित सन् रोदितुमारब्ध , 'खड्डाए छूढो'इत्यादि ( ३६८–५ ) मातङ्गगर्त्ताया प्रक्षिप्य त मेतार्य स्वकीय रूप प्रदर्श्य देवोऽभिहित वान्–भो मेतार्य! पूर्व तावदनेकधा प्रतिवोध्यमानो न प्रतिबुद्धस्त्व, साम्प्रत गर्त्ताप्रक्षिप्त 'किह'त्ति कथ करिष्यसीति कथय, 'सो भणती'त्यादि ( ३६८–६ ) तत स मेतार्यस्तस्य देवस्य स्वरूप ज्ञात्वा तमेवोक्तवान्–मातङ्गसुतोऽयमिति जनमध्ये ममावर्णवाद समभूत् एतस्माच्चावर्णवादान्मा मोचय ततश्च द्वादश वर्षाणि गृहवास परिपाल्य प्रव्रज्या ग्रहीष्यामि ततश्च देवो वदति—'किं करोमी'त्यादि, शेष सुगमम् । 'अभओ भणती'त्यादि ( ३६८–९ ), त पशुमशुचि व्युत्सृजन्त दृष्ट्वा अभयकुमार उक्तवान्–अय पशुस्त्वद्गृहे रत्नानि मुञ्चति नात्रेति देवानुभाव एवाय, किन्तु तथापि परीक्ष्यते, किह'त्ति कथ परीक्षणीय इत्याह–भणितोऽसौ मातङ्ग इति शेष ॥ 'तस्स एगाए वायाए'इत्यादि ( ३६८–१६ ), तेन हि सुवर्णकारेण गृहमानुपाण्यभिहितानि–असै साधवे भिक्षा प्रयच्छत, तैश्च कुतश्चित्कारणान्न तस्यैकेनैव वचनेन भिक्षा साधवे दत्ता, ततश्चासौ सुवर्णकार स्वयमेवोत्थाय भिक्षादानार्थ गृहमध्येऽतिगत –प्रविष्ट । 'पहाणो दंडो'इत्यादि ( ३६९–१४ ), स दत्त प्रधानो दण्ड –सामन्तोऽभूत्, कुलपुत्रकशब्देनेहाम्नायायातशेषसामन्तामात्यादयोऽभिधीयन्ते, ततश्चासौ तान् भेदयित्वा अग्रेतनराजान निष्कास्य स्वय राजा समभूत् ॥ सम्यग्वाद समाप्त ॥ 'नामग साहित्ते'त्यादि ( ३७१–२ ), सोऽह चिलातीपुत्रो यद्यस्ति भवता शक्तिस्तर्हि रक्षणीय सुसुमादिवस्तुजातमित्येव स्वनाम कथयित्वा धन सपुत्र आधर्पित , अय च चिलातीपुत्र' सहस्राराख्याष्टमदेवलोके समुत्पन्न इति चूर्णिकार. । प्रत्याख्यानद्वारे 'राया भोगलोलो'

कौरिके वार २ पादुकानालिकायामिति–पादुकाच्छिद्रयो प्रवेशितवानित्यर्थ । 'अभ्युत्थाने सती'त्यादि ( ३६१–१ ), अत्र हेतुमाह–'विनीतोऽय मित्यादि, यदा ह्यसौ साधूनामभ्युत्थान–अभिमुखोत्थानलक्षण करोति तदा विनीतोऽय-मिति निश्चित्य साधवस्तसै धर्मं कथयन्ति तत्कथनाच्चान्यतरसामायिकलाभोऽस्योपपद्यते, ननु च विनयोऽत्र पृथगुपात्त एव अभ्युत्थानमपि च विनयरूप तत्किमस्य पार्थक्येनोपन्यास ? इति, सत्य, किन्त्वभ्युत्थानस्य प्रधानविनयाङ्गताख्याप-नार्थ भेदेनोपन्यास इति न दोष । 'देशविरतिप्रतिपत्तिपरिणामस्त्वि'त्यादि ( ३६१–९ ), अयमत्राशय –सर्वविरते सर्वसावद्ययोगविरतिलक्षणैकरूपत्वाद् झगित्येवैकसमयेनापि भवति कश्चित्प्रतिपत्त्यारम्भो, देशविरतेस्त्वनेकरूपत्वाद् याव-त्पर्यालोचयति केन रूपणासौ मया प्रतिपत्तव्या तावदसौ परिणामोऽन्तर्मुहूर्त्तेन निष्पद्यतेऽत उक्त–देशविरतिप्रतिपत्ति परिणामस्यान्तर्मुहूर्त्तिक एव, हेतुमाह–नियमिता–नियता एव काचिद् द्वीन्द्रियवधादिनिवृत्तिलक्षणा या प्राणातिपातादि-निवृत्तिस्तद्रूपत्वाद्देशविरते , युक्तिमात्र चैतत् तत्त्व पुन केवलिनो विदन्तीति । 'तित्थयरपवयणे'त्यादिगाथा ( ३६२–८ ), अत्र प्रवचनशब्देन तदन यरूपत्वात्सङ्घो विवक्षित , श्रुत तु द्वादशाङ्ग आचार्यो वैरस्वाम्यादि गणधरस्तु गौतमादि महर्द्धिकस्तु सामान्यसाधुरपि य आमर्षौषध्यादिलब्धियुक्त इति, शेष सुगमम् । 'शोभनमसन'मित्यादि ( ३६४–२० ), कर्मणो जीवात्सकाशाद्य क्षेप स समास इति सम्बन्ध , कया ?–उपशमविवेकसवरलक्षणपदत्रयप्रतिपत्ति-वृत्त्या, समासे हि 'दमदत्ते मेयज्जे' इत्यादिगाथाया चिलातीपुत्र उदाहरण भविष्यति स चोपशमादिपदत्रयप्रतिपत्तिवृत्त्या स्वकर्मप्रत्यास करिष्यतीत्येवमुपन्यास इति । 'एएण रज्ज आयत्त'ति ( ३६६–१२ ) एष एव राज्यक्षमो न मत्पुत्रो

मुखं प्रतिमुख प्रतिसूत्र अनेकार्थाभिधायक सत् सारवच्चवतीत्येकमेव विशेषण, वाशब्दो व्याख्यान्तरसूचक । 'निर्युक्तिस्त्वि'त्यादि ( ३७६–२० ), विचारशब्देनेह चालना गृह्यते । 'धारिणीसहिओ ओलोयण'मित्यादि ( ३७८–१७ ), अत्र भावार्थ –धारिण्या सहितो राजा अवलोकन–गवाक्ष गत , तत्र धारिणी कण्ठा गृहीत भिक्षामटन्त द्रमक ददर्श, त च दृष्ट्वा सानुकम्पा सती नदीसदृशा राजानो भवन्तीतिस्वभर्तारमभिहितवती, यथा हि नद्यस्तोयपरिपूर्ण समुद्रमेव जलेन पूरयन्ति तथा राजानोऽप्यैश्वर्य्ययुक्तसामन्तादिभ्यो द्रव्यजात ददति न पुनरीदृग्विधरङ्केभ्य इत्युपालब्धवती । 'ताओ भत्तग नेच्छति'त्ति ( ३७८–२३ ), भोक्तु नेच्छन्तीत्यर्थ । 'नोस्कन्धो नोग्राम इतिवाक्यशेष' इति ( ३७९–२७ ), नोस्कन्धो नोग्राम स नैगमाद्यशुद्धनयमतेन जीवो नमस्कार इत्यर्थ ॥ तथा 'सम्यग्दर्शनसाहचर्य्यादि'त्यादि ( ३८१–२ ), न केवल ज्ञानावरणस्य दर्शनमोहस्य च क्षयोपशमेन साध्यत इति योगो, हेतुमाह–सम्यग्दर्शनसाहचर्याज्ज्ञानस्य, एतदुक्त भवति–यद्यपि श्रुतरूपत्वान्नमस्कार श्रुतज्ञानान्तर्गतत्वान्मुख्यतया तदावरणक्षयोपशममेवापेक्षते तथापि दर्शनज्ञानयो सहचारित्वाद्दर्शनमोहक्षयोपशमेनापि साध्यते, अत उक्त–दर्शनमोहस्य च क्षयोपशमेन साध्यते इति । 'नानाजीवान् (पुनर)ऽधिकृत्ये'त्यादि ( ३८१–२० ), उक्तमिद केनाप्यभिसन्धिना गम्भीरवचसा वृत्तिकारेण, पर न सम्यगवगम्यते यतो नानाजीवानाश्रित्यैषा स्थिति किमुपयोगतो लब्धितो वा ?, तत्र यद्युपयोगतस्तर्हि पीठिकाया ज्ञानपञ्चकविचारे मतिश्रुतज्ञानयोर्नानाजीवानाश्रित्योपयोगो जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तिक एवोक्तो, नमस्कारस्यापि तदन्तर्गतत्वात्तत्कालप्रमाण एव स्यात्, अनेन त्वत्र जघन्यैवैपेत्यन्तर्मुहूर्त्तलक्षणा स्थितिरुक्ता उत्कृष्टतस्तु सर्वकालमिति कथ न

इत्यादि ( ३७३-१२ ) स हि राजा भोगलोलुपतया अज्ञानादिदमचिन्तयत्-यदि अक्षतो मम पुत्रो भविष्यति तर्हि बलान्मामपहस्य राज्य गृहीष्यति ततो मम भोगा न भविष्यन्तीत्यवधार्य जातमात्रानपि पुत्रान् करचरणादीनवयवांश्छित्त्वा राज्यायोग्यान् करोति। 'कलाउ'त्ति सौवर्णिक पुष्पकारो नाम श्रेष्ठी तस्मिन्नेव नगरे परिवसति स्म, 'अमच्च पउमावई'त्यादि ( अमच्चो य पगते पउमावईय भण्णइ-मू०३७३-१३ ), देव्याऽमात्योऽभिहित -कथमप्येक मत्पुत्र राज्ञा व्यङ्ग्यमान रक्ष ततो यथा भिक्षाभाजन-स्थाल्यादि भिक्षाया आधारो भवत्येव मम पुत्रो रक्षित आवयोराधारो भविष्यतीत्येतद् रहस्यगतं रक्षाम इति। अज्झवसाण सम्मत्त। 'आरादेसादिवदि'ति ( ३७५-१ ), आर् आत् एस् इत्येते आदेशा एतेषु च वर्णाना क्रमनिर्देशमात्र विद्यते न पुनरभिधेयतया कश्चिदर्थ प्रतीयते इत्येवम्भूत निरर्थकमभिधीयते। 'वाक्छलादी'ति ( ३७५-५ ), अत्रादिशब्दादर्थच्छलपरिग्रह, अत्र च द्वयेऽप्युदाहरण विवक्षया नवकम्बल इत्याद्येकमपि भवति, अत्र हि नव कम्बलो यस्येत्येव नवकम्बलशब्दयोरेकवचनान्तत्वे नवशब्दस्य नूतनत्वाभिधायित्वे च विवक्षिते नवकम्बलशब्दयोर्बहुवचनान्तत्वकल्पने नवशब्दस्य सङ्ख्याभिधायित्वे च परिकल्प्यमाने वचनार्थयोरपि छलनोपपद्यते, भेदेन ना किञ्चिदुदाहरणान्तर स्वधिया वाच्यमिति। 'गोशब्दवदि'ति ( ३७६-८ ), गोशब्दो हि बहुपर्यायो बह्वर्थ इति तात्पर्य 'दिशि दृशि वाचि जले भुवि दिवि वज्रेऽशौ पशौ च गोशब्द' इतिवचनाद् एव सूत्रमपि बह्वर्थशब्दयुक्तं विधेयमिति। 'प्रतिमुखमनेकार्थाभिधायक वा सारवदि'ति ( ३७६-१२ ), एतदुक्त भवति-सारवद्विश्वतोमुखं चेति विशेषणद्वय स्वतन्त्रतया सूत्रस्य व्याख्यात, अथवैकमेवेद सूत्रविशेषणमित्यनेन प्रतिपादयति, ततश्चेत्थ योजना-विश्वतो-

गतिषु शेषेषु चेन्द्रियादिद्वारेषु चरमद्वारपर्यवसानेषु सत्पद–नमस्कारलक्षणमाश्रित्य मार्गण–प्ररूपणा कर्त्तव्येत्यर्थ , काना श्रित्येत्याह–पूर्वप्रतिपन्नान् प्रतिपद्यमानकांश्च, इयमत्र भावना–नरकगतौ नमस्कारस्य पूर्वप्रतिपन्ना नियमत सन्ति प्रतिपद्यमानकास्तु भाज्या , तिर्यग्गतौ पञ्चेन्द्रियेष्वेवमेव, विकलेन्द्रियेषु तु पूर्वप्रतिपन्ना कदाचिद्भवन्ति न प्रतिपद्यमानका , एकेन्द्रियेषु तूभयाभावो, मनुष्यदेवगत्योस्तु नरकगतिवद्वाच्यमित्येव शेषेष्वपीन्द्रियादिद्वारेषु सत्पदप्ररूपणा कार्येति गाथाद्वयार्थ । 'अनुक्तद्वारत्रये'त्यादि ( ३८२–६ ), अयमत्र भावार्थ –सत्पदप्ररूपणा तावन्निर्युक्तिकृता 'गइ इदिए अ काए' इत्यादिना पीठिकाया सविस्तरमुक्तेति नेह प्रपञ्च्यते, द्रव्यप्रमाणादीनि तु द्वाराणि यद्यपि वृत्तिकृता तत्रैव भावितानि तथापि निर्युक्तिकृता न साक्षात्तत्राभिहितानीति पूर्वमनुक्तत्वादिह तानि साक्षादभिधत्ते, अनन्तरया त्वेकयैव गाथया द्वारत्रय प्रतिपादयिष्यते, अतस्तदनुरोधादेव द्वारत्रयसञ्ज्ञाभिधान, यावता सर्वाण्यपि प्रायो द्रव्यप्रमाणादीनि द्वाराणि पूर्वं साक्षादनुक्तत्वादिहाभिधास्यन्त इति । 'अन्यथा क्षायिके'त्यादि ( ३८२–१८ ), एक इत्यनेनात्मनोऽरुचि दर्शयति, यतो नमस्कारो मतिश्रुतान्तर्गत इत्युक्त मतिश्रुते क्षायोपशमिक भावमपहाय न कदाचिद्वर्त्तेते, श्रेणिकादीना तु सम्यक्त्व चारित्र वा यदि क्षायिकादिभावे वर्त्तते तर्हि क्षायोपशमिकज्ञानान्तर्गतनमस्कारस्य किमायात ?, तस्मात् क्षयोपशमभावे एव नमस्कारोऽस्य मतेनेत्यवसीयते, ये त्वन्यथाऽपि वर्णयन्ति श्रेणिकादीना ते तद्भावभावित्वमात्रतया सम्यक्त्वरूपतामप्यध्यवस्यन्ति नमस्कारस्येति अविरोध ॥ 'भत्तपाण च तत्थ विभागउ'त्ति ( ३८५–२ ), विभागत कस्मिंश्चित्प्रदेशे लभ्यते कस्मिंश्चिन्नेत्यर्थ । 'एत्थ अट्ठ चाया वण्णेयव्वा'इत्यादि ( ३८६–२२ ), इह यासु प्रज्ञापक प्रश्न वा शकुन वा

विरोध १, अथ लब्धित स्थितिरियमुक्ता तर्हि तस्या सर्वकालभावित्वाज्जघन्यपदाभिधानमयुक्तं, तस्मादिहैव द्रष्टव्य—नाना-जीवानाश्रित्योपयोगापेक्षया जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमेव लब्ध्यपेक्षया तु सर्वकाल स्थितिरिति, यदनामेव गाथा विवृण्वन्नाह चूर्णिकारो—'णाणाजीवे पडुच्च उवओगो जहन्नेण उक्कोसेण य अतोमुहुत्त लद्धीए सव्वद्ध'मिति एवम्भूतेष्वपि च स्पष्टेषु चूर्ण्यक्षरेषु केनाप्यभिप्रायेण वृत्तिकृतेत्थमुक्तमिति न ज्ञायते गम्भीराभिप्रायत्वात्तद्वचसामिति । 'अनेन चार्थान्तरेणे'त्यादि ( ३८१-२२ ), अनेन—नमस्कारस्य पञ्चविधत्वप्रतिपादनेन नम इति पदस्यार्थान्तरेणार्हदादिना सार्द्धमादौ सम्बन्ध आदिसम्बन्धस्तमाहेतियोग , कथ ?—वस्तुस्थित्या—परमार्थेन, तत एतदुक्त भवति—नम इति नैपातिकमेव पदमिति नास्य स्वरूपेण पञ्चप्रकारताऽस्तीत्येकस्वरूपस्यापि नम शब्दस्य पञ्चप्रकारत्व प्रतिपादयति चेत्तर्हि सामर्थ्यादेव निश्चीयते आत्मव्यतिरिक्तार्थान्तरभूतार्हदादिपदपञ्चकाभिसम्बन्धादेवास्य पञ्चविधत्वमिति । 'सतपय पडिवन्ने' गाहा 'सम्मत्त' गाहा ( ३८२ ), व्याख्या—मग्गणत्ति अत्रानुस्वारो लुप्तो द्रष्टव्य क्रिया च स्वयमध्याहार्या, ततश्च नारकादिषु चतसृषु

१ यद्यपि वर्त्तमानेषु बहुषु आदर्शेषु यथाभिमत एव पाठस्तथापि सूरिदृष्टे आदर्शे भविष्यति पाठोऽन्यथाविध इति सर्वमेतदुदित, पाठश्चैव साधत्र 'नानाजीवान् पुनरधिकृत्य जघन्येनोत्कृष्टतस्तु सर्वकालमिति' पर तत्रापि चूर्णिकारस्याक्षराण्यनुसृत्य नानाजीवानाश्रित्य जघन्यकाल उपयोगापेक्ष उत्कृष्टकालश्च लब्ध्यपेक्ष इत्यर्थावबोधने न काचित् क्षति , निर्युक्तिकारेण उपयोगस्यान्तर्मुहूर्त्तकालता प्रत्पादीति 'एवैवेति वाक्येनानूदिता जघन्या, लब्धेस्तु निवेदिता पृथग्, उपयोगश्चोत्कृष्टतोऽप्यन्तर्मुहूर्त्तमानो नानाजीवानामविवक्षित प्रसिद्धेरन्यत्र प्राग् बहुश उक्तत्वाद्वा, अत्र निर्युक्तिकारेण जघन्योत्कृष्टविभागमन्तरैवैकजीवमाश्रित्य स्थितिरुक्ताऽन्तर्मुहूर्त्तलक्षणा ।

इति । 'वट्टखिड्डु'त्ति ( ३९५–११–वड्डुखेड्डु ), एकस्मिन् हस्ते गोलकद्वयमेकस्मिन् हस्ते गोलकत्रय दर्शयित्वा पुनरिन्द्रजालप्रयोगेन केचिद् व्यत्ययेन गोलकान्यत्र दर्शयन्तीन्द्रजालिका तद् वट्टखिड्डुमुच्यते ॥ 'आकरमुक्तिश्चिक्कणिके'ति ( ३९७–७ ), मुच्यते असाविति मुक्ति –कर्मणि क्तिप्रत्यय आकरे मुक्ति –परित्याज्य लोहकिट्टमित्यर्थ तद्धि गाढ्यैनेव परस्परमतिनिभृततया बद्ध भवतीति तत्रापि लोभशब्द प्रवर्त्तते, लुभ गार्द्ध्य इति व्युत्पत्ते । 'पोत्ताइ फालेऊण'त्ति ( ३९९–९ ), बहुमूल्यानि मार्गे सभयानीतिकृत्वा जीर्णचीवराणि पाटयित्वा एकैक खण्ड परिधाय प्रावृत्य च निर्गत इति भाव ॥ 'अचिअ च वट्टइ'त्ति ( ३९९–१४ ), अचित नाम दुर्भिक्ष तदासीदित्यर्थ ॥ 'सद्दवेहिणो य'त्ति ( ४००–६ ), न केवल सरजस्का आनीता ये च शब्दानुसारेण शृगालादिजीव विध्यन्ति ते च दिक्पाला शब्दवेधिन श्चत्वार आनीता इत्यत्रापि सम्बध्यते । 'मायासवत्तीए य असमजसाए'इत्यादि ( ४०१–१२–तस्स मजूसाए ) मातृ सपत्न्या चास्य निमित्तमिति गम्यते विष प्रक्षिप्य मञ्जूषा नद्या प्रवाहिता ॥ 'अमाघाउ'त्ति ( ४०१–१६ ) कस्मिंश्चित्पुण्यदिवसे अमारी उद्घोषिता इत्यर्थ । 'अस्य भावार्थ'इति ( ४०३–१० ), अस्य तत्त्वार्थभणितसूत्रस्य भावार्थ कारिकाभिरुच्यते, ताश्चेदानीं कारिका यथावैषम्यसम्भवं व्याख्यायन्ते–'सर्वाहारप्रियत्वविदि'ति ( ४०३–१४ ), सर्वेषा जीवाना आहारप्रियत्व वेत्ति स तथा यथा हि ममाहार प्रियस्तथा अन्येषामपि जन्तूना स एव प्रिय इत्येव जानन् स्वशरीरगतशोणितपानरूपाहारप्रवृत्ता दशमशकास्तान्न वारयेदित्यर्थ । 'सङ्गपङ्कसुदुर्बोधा' इति ( ४०३–१६ ), सङ्ग एव पङ्क सङ्गपङ्कः सुष्ठु–दु खेन बाध्यते सुदुर्बाध सङ्गपङ्क सुदुर्बाधो यासा ता सङ्गपङ्कसुदुर्बाधा दुष्परित्याज्यसङ्गा इत्यर्थ ।'श्मशा

गृहीत्वा निमित्त किञ्चिदालोचयति ता प्रज्ञापकापेक्षयाऽष्टौ च दिशोऽष्टौ च विदिशो भवन्ति, तासु यथाक्रम पोडशैव वातान् निरूपयन्नाह—'पाईणवाए'त्यादि, अत्र च स्थापना—

| | | |
|---|---|---|
| पू. सतासुओ सतासुओ उ सता सुओ | पूर्व वात | पू० तुगारो तुगारो द० तुगा रो |
| उ वात | | द वात |
| उ गज्जभो गज्जभो प गज्ज भो | प वात | द पीताउ पीताउ प पीत भो |

एतेषु षोडशवातेषु मध्ये य प्रवहणाना प्रतिकूलो वात स सर्वोऽपि कालिकावातसञ्ज्ञोऽवगन्तव्योऽनुकूलस्तु गजभ ॥ 'कलि-कलिडु'त्ति ( २९०-५ ), कलिकरण्डक इत्यर्थ । 'स्वगुणोपकारमूर्च्छात्मकत्वादि'ति ( २९०-१२ ), स्वे च ते गुणाश्च-जातिसम्पन्नताद्यस्तेभ्यो य आत्मप्रतिष्ठाप्राप्त्यादिक उपकारस्तन्मूर्च्छात्मकत्वात्, एतदुक्त भवति—मानस्तावत्स्वगुणबहुमानात्मक प्रतीत एव, मायापि परवञ्चनात्मिका स्वार्थलाभमूर्च्छितैरेव विधीयते, एव च स्वगुणोपकारमूर्च्छात्मकत्वेन कृत्वा प्रीत्यन्तर्गतत्वान्मानमाये लोभस्वरूपे एव, अत्र मानादीना य प्रीत्यशस्तस्य लोभेऽन्तर्भावोऽप्रीत्यशस्य तु क्रोधे इत्येवमशकल्पना कृता, ऋजुसूत्रमतेन त्वखण्डरूपा एव मानादय प्रीतिरूपा लोभे त एवाप्रीतिरूपा परिपूर्णा एव क्रोधेऽन्तर्भवन्तीति उक्त न पुनस्तत्राशकल्पना कृतेति शब्दादीनामृजुसूत्राद्भेदोऽन्यथा वा सुधिया समुत्प्रेक्षणीय इति ॥ 'सो परिखिज्जइ भत्तेण'मित्यादि ( २९१-८ ), स हि राजा किलोपोषितस्तीर्थमिति कृत्वा वासुपूज्यप्रतिमान्तिके प्रव्रज्याग्रहणार्थमुच्चलितोऽत प्रत्याख्यानभङ्गार्थं भक्तादिना ताभ्या निमन्त्र्यते । 'तो त माहणा पहए'त्यादि ( २९३-७ ), ततस्त सुभूम ते ब्राह्मणा प्रहारै प्रहतवन्त ते च सर्वेऽपि प्रहारा मेघनादाख्यविद्याधरेण तेषामेव ब्राह्मणानामुपरि पात्यन्त

नाश कृतो, यदिवाऽसौ तमपि कुर्यात्को निवारयेत्', तस्मान्ममैषोऽपि लाभो यदनेन जीवितनाशो न कृत, इत्येव भावना भावनीया, यतीना शास्त्रविहितत्त्वात्, यदाह—"अक्कोसहणणमारणधम्मब्भसाण बालसुलहाण । लाभ मन्नइ धीरो जहोत्तराण अभावमि ॥ १ ॥" किञ्च—क्षमायोगाद्गुणासे, भवन्ति हि क्षमावतामिह लोके यश कीर्त्यादय परलोके च सुगतिप्राप्त्यादयो गुणा, 'क्रोधदोषत' इति क्रोधे सति दोष क्रोधदोष तस्माच्च क्षमैव कर्त्तव्या, सम्भवन्ति हि क्रोधवतामिहलोकेऽपि प्राणनाशाकीर्त्यादय प्रेत्य च नरकगमनादयो दोषा इति श्लोकार्थ । 'अजानन् वस्त्वि'त्यादि (४०३–२६), यद्यपि विवक्षित किञ्चिज्जीवाजीवादिवस्तुजिज्ञासु–बोद्धुमिच्छुर्न तत्स्वरूप जानाति तथापि न मुह्येद्वि-(द्वान्) जन्मापि विफल मम गर्भेऽपि किं नाह विलयमुपगत इत्यार्त्तध्यानरूपा विचित्तता न कुर्यादित्यर्थ, कथम्भूत ? 'कर्म्मदोषचित्' यो हि रागद्वेषोपहतैर्जन्तुभि अन्यजन्मनि यान्युपचितानि ज्ञानावरणादिकर्म्माणि तद्विलसितमेवेद नान्यात्मान विहायापर कश्चिदपराध्यतीत्येव कर्म्मदोष जानाति स कथमार्त्तरूपा विचित्ततामुपगच्छेत् ? प्रत्युत सद्बोधावरणकर्म्मक्षपणाय धर्म्मध्यानमेवानुतिष्ठेद्, अन्येषा च ज्ञानिना चतुर्दशपूर्वधरादीना सातिशयज्ञानमन्वीक्ष्य 'तथैवेति' यथा निन्दात्मरूपमोहपरित्याग पूर्वार्द्ध प्रतिपादितस्तथैव कुर्याद् 'अन्यथा नत्त्वि ति परेषु सद्बोधमात्मनि चाज्ञतामवलोक्य न मोहपरित्यागरूपप्रतिपादितोपदेशादन्यथा विधेय, नात्मनिन्दादौ प्रवर्त्तितव्यमिति भाव इति श्लोकार्थ । सर्वेऽपि चैते परीषहा 'ज्ञानावरणवेद्योत्था' इत्यादिना (४०४–२), चतुर्षु कर्म्मस्वन्तर्भवन्तीत्युक्त केवल विवृण्वता ज्ञानावरणान्तरायवेदनीयान्तर्भाविन एवोक्ता न मोहोदयजन्या, ते चामी द्रष्टव्या —'अरई अचेल इत्थी निसीहिया जायणा य अक्कोसे ।

नादिनिषद्यास्वि'त्यादि ( ४०३-१७ ), श्मशानादिषु समुद्भूतानुपसर्गानेको-रागद्वेषविरहित क्षमेतेति योग, कथम्भूतान्, ?-अनिष्टेष्टान तत्रानिष्टा व्यन्तरादिकृताट्टहासादयस्तान् अभी -निर्भय सन् सहेत, इष्टास्तु दिव्याङ्गनाभ्यर्थनादयस्तान् अस्पृष्टो-विगततदभिष्वङ्ग सहेतेति यथासङ्ख्य सम्बन्ध, क सहेतेत्याह-'रूपादिकण्टकवर्जिते' (४०३-१८), तत्र वर्जन वर्जितमभाव इत्यर्थ रूपादय एव मोक्षपथप्रवृत्ताना विघ्नहेतुत्वेन कण्टका इव कण्टकास्तेषा वर्जित-अभावस्तस्मिन् सति, एतदुक्त भवति-प्रथम रूपादिकण्टकाभाववत्यपि श्मशानादिस्थाने समाश्रिते यदि पश्चात्कथञ्चिदागन्तुका इष्टा अनिष्टा वोपसर्गा प्रादुर्भवन्ति तान् सम्यगेवारक्तद्विष्ट सहेतेति श्लोकार्थ । 'शुभाशुभास्वि'त्यादि, मनोज्ञामनोज्ञासु शय्यासु-वसतिषु लब्धासु सतीषु तत्र मनोज्ञाया सुखे समुपस्थिते सति सङ्ग-तत्सुखाभिष्वङ्ग नेयात्-न गच्छेत् दु खे च समुपस्थिते दु ख सहेत नोद्विजेतेति यथाक्रम सम्बन्ध, कि पुनश्चेतसा भावयन्निद कुर्यादित्याह-कि ममानया ( मनोज्ञयाऽ ) मनोज्ञया वा कर्त्तव्य ?, यत श्व-आगामिनि दिने त्याज्या परिहर्त्तव्येय, साधूनामेकत्रावस्थितेरभावात् कोऽत्र प्रतिबन्धो द्वेषो वेत्येव मनसा परिभावयेदिति श्लोकार्थ । 'नाकुष्ट'इत्यादि श्लोक ( ४०३-१९ ), सुगमो, नवर 'साम्या'दिति रागद्वेषविरहित सम उच्यते तस्य भाव साम्य तस्मात्, किमुक्त भवति ?-परेणाक्रुष्टोऽपि समतामवलम्ब्य सहेत न पुनस्तमाक्रोशेदिति । 'हत सहेतैवे'त्यादि ( ४०३-२० ), केनचिल्लकुटादिना हत -ताडित सन् सहेत न पुनस्त भन्त प्रतिहन्यात्, कथम्भूत ?-साम्यमिति पूर्ववद्वेत्ति साम्यचित् क्षमैव कर्त्तव्या न पर प्रति क्रोधो मनसाऽपीति, अत्रोपपत्तिद्वारेण भावनामाह-'जीवानाशात्' यद्यपि लकुटादिना ताडितोऽह तथापि न ममानेन जीवित-

( ४०६–२४ ), ननु चापान्तरालिक स्वर्गादिफलमभिधीयते पातनाक्रमायातगाथाया तु 'जीव मोएइ भवसहस्साउ' इत्यनेन मोक्षलक्षण फलमभिधास्यते तत्कथ पातनागाथार्थयोर्न विरोध इति ?, तदयुक्त, अभिप्रायापरिज्ञानात्, न ह्यत्र स्वर्गादिफलापेक्षयाऽपान्तरालशब्द उक्त किन्तु 'उप्पत्ती निक्खेवो पय पयत्थो' इत्यादिमूलद्वारगाथाक्रमेणार्हदादीना पञ्चा नामपि नमस्कारस्य यत्समुदित पर्यन्ते फलमभिधास्यते तदपेक्षया मोक्षलक्षणमपीद प्रसङ्गत उच्यमानमपान्तरालिक विवक्षितमिति न विरोध । 'धतपी'ति ( ४०७–१८ ) अत्यर्थमपि समर्थचित्तेनेत्यर्थ । 'तप्पणईण गाहा' ( ४०७–१८ ), यस्मादेव पूर्वोक्तनीत्या स एव शुभचित्तनिबन्धनत्वेनापत्कालाद्युचित तस्मात् तम्–अनन्तरोक्त द्वादशाङ्ग श्रुतस्कन्ध प्रणयन्ति–अर्थत सूत्रतो वा विरचयन्तीति तत्प्रणयिनो, यदिवा तस्य–प्रस्तुतनमस्कारस्य योग्यास्तत्प्रणयिन उच्यन्ते अर्हदादय एव तेषा शुभेन चेतसा अयमेवाधिकृतनमस्कार कृतज्ञता कृतार्थता चात्मनो मन्यमानेनानुस्मरणीयो–विधेय इति गाथार्थ । 'अर्थत' इति ( ४०८–३ ), सिद्धशब्दाभिधेयतामात्रेणेत्यर्थ । 'कौकणा'इत्यादि ( ४०८–१७ कोंकणगदेसे ), एकस्मिन्दुर्गे निवसन्त कुङ्कुणदेशोद्भवा पुरुषा सह्यनाम्न पर्वताद् गोधूमगुडघृततैलादिभाण्डमवतारयन्त्यारोहयन्ति च । 'कुदुरुकपडिबोहियपल्लउ'त्ति ( ४०८–२० ), कुकुडेन रत कुर्वता प्रातर्निद्रा त्याजित सन् इति भाव । 'रित्तत्थिक्कस्स'त्ति ( ४०८–२२ ), रिक्तस्य स्थितस्येत्यर्थ । 'अब्भुट्ठिउ'त्ति ( ४०९–३ ), सोऽपि सिद्धकस्तत्रान्तरे सवेगमुपगत –प्रव्रज्या जग्राहेत्यर्थ ॥ 'सो य मूयभावेणे'त्यादि ( ४०९–७ ), दासीसुत किल शिल्पविद्याध्ययन न कार्यते, ततश्च रथकारेण स्वपुत्रेष्वध्याप्यमानेषु स दासीसुतो मूकत्वेनावतिष्ठतेकिलाह न किञ्चिच्छृणोमीति, अथ च

सक्कार पुरक्कारे सम्मत्त अट्ठ मोहम्मि ॥ १॥' एते सर्वेऽपि परीषहा कस्य स्वामिन कियन्त सम्भवन्तीति प्रतिपादयन्नाह–'चतुर्दशैत'इत्यादि ( ४०४–४ ), स इति सभवोऽभिसम्बध्यते । 'किण्हवन्नण्ण'ति ( ४०४–१२ ), तिलसलेनेत्यर्थ । 'सिरिघरदिट्ठत'मित्यादि ( ४०४–१८ ), श्रीगृह–भाण्डागारमुच्यते, तद्दृष्टान्तश्चाय–स क्षुल्लको राजानमुवाच–यदि कश्चिद्युष्मद्भाण्डागार विनाशयति तर्हि भवन्तस्तस्य प्राणनिग्रहादिदण्ड कुर्वते नवेति वाच्य, कुर्म एवेति राज्ञोक्ते क्षुल्लक आह–यद्येव मयाऽपि ज्ञानादिरत्नत्रयरूपात्मीयश्रीगृहलुण्टने प्रवृत्तेय दण्डिता न ममापराध इत्येष श्रीगृहदृष्टान्त । 'सो य किल सुसीस'इत्यादि ( ४०५–२ ), स च किल चन्द्रगुप्तश्चाणक्यस्याज्ञाकारी सुशिष्य आसीद्, अत्र च चाणक्येन चिन्तित–मया तावदसौ जैनधर्मे प्रवर्त्तनीय , केवलमुपायान्तरेण, अन्यथा मा पक्षपातिन निश्चेष्यतीत्यभिहित–राजन् सर्वेऽपि तीर्थिका आकार्य क्रमशोऽन्त पुरे धर्म्मदेशन कार्यन्ते, एतद्रूपदर्शनेन सविलासजल्पितादिभिश्च न क्षोभ्यन्ते तेषा विगतरागद्विषा सम्बन्धी धर्म्मस्त्वया कार्य इत्याह–'अतेउरधम्मकहण'मित्यादि । 'उस्सरिउ'त्ति ( ४०५–२ ), ओसरिओ–क्षणमेक स्थित्वा शरीरचिन्तादिव्याजेन यतिक्षोभननिमित्त पुनरपि निर्गत इति भाव ॥ 'रायसन्नाय'मि-त्यादि ( ४०५–४ ), तेनेर्ष्यालुना राजविदित नगरे उद्घोषित–मम गृहे न केनचित्प्रवेष्टव्य सप्तवृत्तिपरिक्षिप्त गृह कारित । 'उद्देसिइ चेइए'त्यादि ( ४०५–१० ), औद्देशिके स्निग्धमधुरादिके चिंतिते–केनचिद्दत्ते सति तया प्राभृतिकया अजी-र्णया सत्या ये शिरोवेदनादय समुपजायन्ते सामान्यतस्ते आत्मसवेदनीयोपसर्गा , साम्प्रत विशेषत आह–'ते चउ-विहे'त्यादि 'सुत्तो थद्धो जाउ'त्ति ( ४०५–१२ ), चरणादिरवयव इति गम्यते । 'अपान्तरालिक नमस्कारफल'मित्यादि

प्रेष्यो यतस्तेन सममात्मीय प्रेषयाम । 'वणसडो'त्ति, तस्य ग्रामस्य पूर्वस्या दिशि वनखण्ड आसीत्, स च पश्चिमाया दिशि प्रक्षेसव्य इति राज्ञा समादिष्ट, रोहकेण तु तत स्थानादुच्चाल्य तस्यैव वनखण्डस्य पूर्वदिग्भागे ग्राम सस्थाप्य राजवचोऽनुष्ठित । 'क्षीरान्न चाग्नि विना सस्करणीय'मित्यादिष्टे उत्कुरुटिकाया रविकिरणतप्तकरीषपलालादुष्मणा सस्कृतमित्याह—'परमन्न'मित्यादि ( ४१६–१५ ), 'चक्कमज्झभूमीए'त्ति ( ४१७–१ ), गन्त्रीचक्रोत्थापितरेखामध्येन सहि किल नोत्पथो नापि मार्गश्च, चक्राक्रान्तरेखाद्वयमध्यस्यैव लोकरूढ्या मार्गत्वादिति भाव । 'पडिक्कमोरूढो'त्ति ( ४१७–१–वृ० एडगारूढो ), तदारूढो हि किलावनि पादाभ्या स्पृशति ततश्च न चरणैर्नापि यानेनेत्याराधित भवति । 'वासदेयभडाण विक्कओ जाउ'त्ति ( ४१८–१ ), यावद्भाण्ड वर्षेण विक्रीयते तावदेकदिवसेन विक्रीतमिति भाव । 'उट्टवामि'त्ति ( ४१८–६ ), उष्ट्रा इत्यर्थ । 'लक्खाविउ त्ति ( ४१८–१६–वृ० लक्खाए विलिपित्ता )वैद्येन स कृकलासो लाक्षारसेनानुलिप्तो येन मदीयोदररक्तानुलिप्तोऽसाविति तस्य भ्रान्ति समुत्पद्यते । 'गयघयणगोलखभे खुड्डगमग्गितिथ पइपुत्ते' इत्यत्र ( गाथा ९४० ) गयत्ति द्वारमाश्रित्य केचिन्न गजदृष्टान्त व्याचक्षतेऽपि तु गतगोदृष्टान्तमित्याह—'अन्ने गाविमग्गो सिलाए'त्यादि ( ४१९–१२ ) अत्र च भावार्थ –तस्करैर्गावोऽपहृतास्तासा च शिलानिचयाकीर्णमार्गेण नीतत्वात्पद नोपलभ्यते अपरस्य तु कस्यचित् स्वबुद्धिप्रकर्षादुदरावष्टम्भेनावाङ्मुखनिपतितस्योदरे गवा पदानि प्रतिबिम्बितानि तदनुसारेण मार्गमुपलभ्य निवर्त्तितास्तेन गाव इत्यस्यौत्पत्तिकी । 'उवाहणाण भारेण उवट्ठिउ'त्ति ( ४१९–१५ ), यदा ह्यसौ भण्डो देव्या निर्विषय समाज्ञातस्तत उपानद्ग्रथितमाला वंशप्रान्तेऽवलम्ब्य देव्या समीपमागत , पृष्टश्च तया–

सर्वां शिल्पविद्यामवधारयतीति भावार्थ । 'किकम्मय त्ति( ४०९-१५ ), किंकर्म्म गच्छन्तीति किंकम्मंगा , भरन्त कन-
धिकार कृतवन्त इति पृष्टा । 'इमेण त सघाइय'मित्यादि ( ४१०-८ ), अनेन कोकाशवर्द्धकिना यदर्द्धनिष्पन्नमा
सीच्चक तत्परिपूर्ण निष्पादित, कीदृश च स्वविज्ञानातिशयात् कृत तदित्याह-ऊर्द्धीकृत्य प्रक्षिप्त सत् याति यकुतर भूदे-
शमाक्रामति अग्रे च कुड्यादौ प्रतिघातस्थाने प्रस्खलित निवृत्त सत् न तत्रैव निपतति किन्तु प्रतिमुख निवर्त्तते यावतो
भूभागात्प्रक्षिप्त तावन्त पुनरपि निवृत्त सदाक्रामतीत्यर्थ , ऊर्द्धस्थानेन च स्थित सन्न पतति कि तु तथैव तिष्ठति, इतरस्य
च तन्नगरवासिनो वर्द्धके सत्क यत्नेन घटित तत्किमित्याह—'जाती'त्यादि ( ४१०-९ ) सुगम । 'महाविस्सदा
दोन्नि'त्ति ( ४११-१६ ), द्वे पाषाणमयकुण्डिके तत्राभूतामित्यर्थ । 'तेसिं कप्पराण'मित्यादि ( ४१२-१ ), तेषा घा
काशेन गच्छतान्नाणामग्रत सितवस्त्रापिधान पतद्ग्रहको गच्छति तन्मध्यस्थिता च टोप्परिका-कडाहिका कस्यचिदुपासकस्य
गृहे गता, सा च सर्वप्रवरे आसने तैरुपासकै स्थापिता, अन्यथाऽनादरेण दृष्टा सती अगृहीतैव भक्तपानादिक स्वस्वा
मिनोऽतिक्रमायाति सातिशयत्वादिति भाव । 'कट्ठविरूढगो'त्ति-( ४१३-१३ ), एकस्मिन्काष्ठे समारूढोऽन्यानि समा
कर्षति । 'कादाचित्क वा कर्म्म'त्यादि ( ४१५-२ ), यत् किल पीठफलकादिनिर्मापण तस्मिन्नेव क्षणे प्रारब्ध तस्मि
न्नेव निष्पद्यते न पुन प्रासादादिवन्नित्य प्रतिदिन क्रियते तत्कादाचित्क कर्म्माभिधीयते, प्रासादादिनिर्माण तु बहूनि दिनानि
यावन्नित्यव्यापार शिल्पमुच्यते । 'भरहदारएण ति ( ४१६-८ ), भरतो-नटस्तत्पुत्रेण । 'अगडे'त्ति ( ४१६-१४ )
राज्ञा समादिष्ट-कूप एक प्रेषणीयो, रोहकेणोक्त-आरण्यको ग्राम्यकूप एकाकी समागच्छन् बिभेतीति भवद्भिर्नागरिककूप

गरोचित इति मायावचोविरचना विधाय तस्यैव समीप गता नेतरस्येति, राज्ञाऽप्यवगत यदुतास्या अयमेव प्रिय इति भावार्थ । 'सित्थगकरो'त्ति( ४२१–१ ), मधुसिक्थकर सर्वप्रकृतिभ्यो राज्ञा याचित इति भाव । 'उब्भामिय'त्ति कुशीलेत्यर्थ । 'पड्डप्पाइय'त्ति ( ४२१–२ ), उपपतिना सार्द्ध निधुवनसमये उत्तानया स्थितया जाल्या मध्ये भ्रामर मधु दृष्टमिति भावार्थ । 'वाउत्तिए'त्ति व्याकुलया मधुसिक्थादर्शनेन व्याकुलया, अनेन सस्थानेन स्थिता दृष्ट्वा मद्दुश्च-रितमसौ ज्ञास्यतीति विचारशून्ययेत्यर्थ । 'पुरोहिओ निक्खेवए घेत्तूणे'त्यादि ( ४२१–४ ), एकस्मिन्नगरे पुरोहित प्रतिवसति, तत्समीपे च तीर्थयात्रादिप्रवृत्तलोका निक्षेपकान् मुक्त्वा व्रजन्ति, स चान्येभ्य प्रत्यागतेभ्यस्तान् समर्प्पयति, एकेन तु द्रमकेन यन्मुक्त तन्न प्रयच्छति, स च तदलाभात्पिशाचीभूतस्त पुरोहित स्वद्रव्य याचमानो मार्गे गच्छताऽमा-त्येन ददृशे, सजातकृपेण चानेन राज्ञे निवेदित, अन्यदा च पुरोहितेन नक्त राज्ञा सम द्यूतक्रीडाप्रवृत्तेन हारिते सति स्वनामाङ्कितमुद्रिका ग्रहणके सारिता, ताञ्च पूर्वसङ्केतितपुरुषो राज्ञ सकाशाद्गृहीत्वा पुरोहितगृह ययौ, तन्मुद्रिकासाभि-ज्ञानेन च तद्भार्याया सकाशाद्रमकगृहीतद्रव्य समानीय राज्ञ समर्प्पितवान्, राज्ञा च स द्रमकनिवलक स्वद्रव्यभृत-निवलकाना मध्ये प्रक्षिप्त, स च द्रमक आकार्योक्त –अमीषा मध्ये यस्त्वदीयस्त गृहाण, तेन च प्रत्यभिज्ञाय स्वकीयो गृहीत इत्ययमत्र भावार्थ, एतदनुसारतश्च चूर्ण्यक्षराणि नेयानि । 'तहेव एगेण निक्खित्त'ति ( ४२१–९ ), तथैवैकेन पथिकेन कस्यचिद्वणिज समीपे सहस्रद्रव्यभृतनिवलको न्यासीकृत तेन च वणिजा स उत्सीवित शुद्धद्रम्मा स्वय गृहीता स च कूटद्रम्मैर्भृत, कूटाश्च किल निस्सारत्वात् स्वल्प देश रुन्धन्तीत्यधस्तात्कर्त्तयित्वा सङ्कटीकृत्य पुनरपि सीवित, शुद्ध-

किमेपोपानन्माला ?, स प्राह–एवम्भूता निरामया तस्य राज्ञो देवी वर्त्तते इत्येवम्भूता त्वत्कीर्त्तिरिति म्यानात् त्वया नि-
ष्कासितेन मया बहुषु देशेषु नतव्या, न चैतावदुपानद्व्यतिरेकेण तावन्तो देशा पर्यटितु शक्या, ततो देव्या चिन्तित–
साम्प्रत तावदेष एवंतज्जानाति निर्गतस्तु सर्वत्र मा विडम्बयिष्यति तस्मादिहैव तिष्ठत्वेष इति भीतया तत्रैव धृत इति
भावार्थ । 'हत्थो दूर पसारिउ त्ति ( ४२०–५ ), कारणिकैर्हि द्वयोरप्यत्यन्तसदृश रूप दृष्ट्वा निश्चित–न व्यन्तरिकाम
न्तरेणैवम्भूत सर्वावयवैरविसवादिरूप कश्चिन्निर्वर्त्तयितु क्षमो, निसर्गेण हि यत्र द्वयो सादृश्य भवति तत्रापरस्य कश्चिद्-
वयव कथञ्चिद्विसवादी भवति, नैनमत्र तस्मादनयोरेकयाऽवश्य व्यन्तरिकया भाव्य, पर काचिदिति न ज्ञायतेऽतस्त-
द्विज्ञानार्थं तैस्तद्भर्त्ता दूर प्रेषित , ते च द्वे अप्यभिहिते–तस्य पुनरप्यत्रागतस्य सतो भवत्योर्मध्ये या प्रथममासन दास्यति
तस्या एवासौ भर्त्तेत्यभिधाय पुनरेवाकारित , तस्य चागच्छतो व्यन्तरिकयाऽपर्यालोचितकारित्वात् सहसा दिव्यानुभावेन
करमतिदूर प्रसार्य्यासन दत्तमतोऽवगत कारणिकैरेषा व्यन्तरीति भावार्थ । 'एव नाय ( असद्दहतेसु ) पुणोवि
पट्टविऊणे'त्यादि ( ४२०–१३ ), एव ज्ञातममात्येन योऽनया पूर्वस्या दिशि प्रेषित स द्वेष्यो, राजादयस्तु नेद श्रद्दधति
भणन्ति च–अवश्य द्वयोर्मध्ये एक कश्चनापि पूर्वस्यामपि प्रेषणीय किमत्र द्वेष्यत्व ?, इत्येव तेष्वश्रद्दधानेषु पुनरप्यमात्येन
तद्भर्तृद्वय पूर्वापरदिग्वर्त्तिग्रामयो प्रस्थाप्य तयो शरीरकारणवार्त्तासूचकौ युगपद्द्वौ पुरुषौ तद्गृहे प्रेषितौ, ताभ्या च प्रत्येक
तद्भर्तृद्वयशरीरकारणमात्यन्तिक तस्यै निवेदित, तया च लोकचित्तानुवृत्त्यर्थमुक्त–यद्यपि द्वयोरपि समानमात्यन्तिक
शरीरकारण तथापि एष य पश्चिमाया दिशि प्रेषित स मन्दसहननोऽसमर्थो वेदनानिवहमधिसोढु अत स एव प्रतिजा-

'वीओ आपुच्छइ-सब्भाव'मित्यादि ( ४२३-२० ), द्वितीयो येन न
इत्येव चूडामणिपठितश्लोकोऽय द्रष्टव्य । 'वीओ आपुच्छइ-सब्भाव'मित्यादि ( ४२३-२० ), द्वितीयो येन न सम्यगवगत स उपाध्याय पृष्टवान्-ममानेन सार्द्ध सममेवाधीयानस्य न शास्त्रसद्भावमावेदयसि त्व, अस्य तु सम्यक्कथयसीति त सकोपाभिसन्धिमालोक्योपाध्यायस्तौ पप्रच्छ-कुतो व्यतिकरादिदमभिधीयते", ताभ्या सर्व यथावृत्तमावेदितमुपाध्यायाय, तत्रैक प्राह-मया घटस्य विपत्तिमालोक्य "तज्जाएण य तज्जाय' मित्यादि पर्यालोचयता वृद्धासुतस्य मरणमादिष्ट, अपरस्त्वाह-ममेत्थमवगत, घटस्तावदय भूविकारो भग्न सन् भुव एव मिलित एव सोऽपि वृद्धासुतस्तदुद्भवत्वात्तस्या एव मिलिष्यति, यदुक्त-"तज्जाएण य तज्जाय"मित्यादि, गुरुणा च स मन्दप्रज्ञ शिष्य उक्त-तज्जाएणेत्यादि श्लोको द्वयोरपि मयैकरूपतया व्याख्यात, स्वप्रज्ञादोषात्तु न तव सम्यक् परिणत इति कोऽत्र मम दोष इति । 'अत्थसत्थे-रूप्पओ दहिकुडउच्छुकलावस्से'त्यादि ( ४२४-२ ), अर्थशास्त्र-नीतिशास्त्र तत्प्रावीण्ये कल्पको दृष्टान्त, कथानक चेदमुपरिष्टाद्योगसङ्ग्रहेषु न्यक्षेण वक्ष्यते, स्थानाशून्यार्थं च लेशात किञ्चिदुच्यते-पाटलीपुत्रनगरे नन्दाभिधानेन राज्ञा कल्पकाभिधानो निजामात्य कस्मिंश्चिदपराधे सकुटुम्बोऽन्धकूपे प्रक्षिप्त, तद्भोजनार्थं च कोद्रवकूरभृत शरावक पानीय च किञ्चित्प्रक्षिप्यते, तच्चाल्पमिति वैरनिर्यातनार्थं जिजीविषु कल्पक एवैको भुङ्क्ते न शेषाणीति कल्पकवर्ज सर्वाण्यपि मृतानि, नन्दश्च कल्पकबुद्धिबलेनैव राज्यमकरोद्, अतस्तमन्धकूपे क्षिप्त मत्वा समस्तप्रतिपक्षराजवर्गेण पाटलीपुत्रे वेष्टिते नन्द कल्पक स्मृतवान्, कथित च तत्पुरुषै-देव ! तत्र कूपे प्रक्षिप्त भक्तमद्यापि कश्चिद्गृह्णाति, ततः कूपादाकृष्य कल्पक सप्रणय राज्ञाऽभ्यर्थितो-न भवद्बुद्धिमन्तरेणापदिय निस्तीर्यते तस्मात् कुरुष्व किञ्चिदुपाय, अत

द्रम्मास्तु वहुद्रव्यत्वात्किल प्रभूतदेशे मान्तीति, विवादे सञ्जाते कारणिकै पुनरपि शुद्धद्रम्माणा सहस्रे तु प्रक्षिप्ते नासौ निवल्क सीवितु शक्यत अतो ज्ञात वणिग्विलसितमिदमिति भावार्थ । अन्ये त्वन्यथापि भावयन्ति, तच्च विस्तरभया नोच्यतेति । 'नाणग तस्सेव निक्खेवत्तो'इत्यादि ( ४२१–१२ ), अत्रापि कस्यचिद्वणिज समीपे शुद्धवहुमूल्यचउद्ध-कादिद्रम्मस्वरूपनाणकभृतनिवल्को न्यासीकृत, तेन वणिजा ते द्रम्मा वहुमूल्यत्वात्स्वय गृहीतास्तत्र च निवल्के अल्पमूल्याशुद्धपणाभिध नाणक प्रक्षिप्त, स्वामिनि चागते समर्पितो निवल्क, तेन चोक्त–नेद मदीय नाणक, त्वया परा-वर्तितमिदमिति, विवादे सजाते कारणिकैरुक्त–भो पथिक ! कस्मिन् सवत्सरे त्वया इद अस्य समर्पित ?, कथितश्चानेन सवत्सर, तत कारणिकैर्वणिग् निर्भर्त्सितस्तस्मिन्काले पणाना निष्पत्तिरेव नासीद् आधुनिकत्वादमीषा, तदाऽविद्यमाना स्त्वयानेते कथ समर्पिता ?, तस्माद्यदस्य सत्क नाणक तत्समर्पय, समर्पित च तत् वणिजा, दण्डितश्च राज्ञेति भावार्थ, एतदनुसारतश्चूर्ण्यक्षराणि नेयानि । 'अन्नेवि भिक्खुइतगा'इत्यादि ( ४२१–१५ ), यदा हि तेन भिक्षुणा तस्मै निक्षेपक समर्पित तदा द्यूतकारैरुक्तम्–अन्येऽपि भिक्षवोऽस्माभि सह समायातास्तिष्ठन्ति ततस्तेऽप्यस्या युष्मत्सदुपाया सर्वं सुवर्णं स्थापयिष्यन्त्यतस्तानप्याकारयाम इति व्याजेनोत्थाय सर्वे निष्क्रान्ता इति भावार्थ । 'पिइमिस्सय'त्ति–( ४२२–७ ), मातापित्रो पूज्यवचनमिद मातापित्रादय इत्यर्थ । 'वहिपउत्त न उग्गमइ'त्ति ( ४२२–१३ ), भर्तार मन्तरेण कलान्तरदत्त द्रव्य न लभत इत्यर्थ । 'परिभट्ठउ'त्ति ( ४२२–१६ ) परिव्राजक । 'तज्जाएण य तज्जाय सिलोगो'त्ति (४२३–१९), "तज्जाएण य तज्जाय, तन्निभेण य तन्निभ । तारुवेण य तारुव, सरिसे सरिय विणिद्दिसे ॥ १ ॥"

इत्येव चूडामणिपठितश्लोकोऽयं द्रष्टव्य । 'बीओ आपुच्छइ-सब्भाय'मित्यादि ( ४२३-२० ), द्वितीयो येन न सम्यगवगत स उपाध्याय पृष्टवान्-ममानेन सार्द्धं सममेवाधीयानस्य न शास्त्रसद्भावमावेदयसि त्व, अस्य तु सम्यक् कथयसीति त सकोपाभिसन्धिमालोक्योपाध्यायस्तौ पप्रच्छ-कुतो व्यतिकरादिदमभिधीयते", ताभ्या सर्वं यथावृत्तमावेदित-मुपाध्यायाय, तत्रैक प्राह-मया घटस्य विपत्तिमालोक्य "तज्जाएण य तज्जाय"मित्यादि पर्यालोचयता वृद्धासुतस्य मरण-मादिष्ट, अपरस्त्वाह-ममेत्थमवगत, घटस्तावदय भूविकारो भग्न सन् भुव एव मिलित एव सोऽपि वृद्धासुतस्तदुद्भव-त्वात्तस्या एव मिलिष्यति, यदुक्त-"तज्जाएण य तज्जाय"मित्यादि, गुरुणा च स मन्दप्रज्ञ शिष्य उक्त -तज्जाएणेत्यादि-श्लोको द्वयोरपि मयैकरूपतया व्याख्यात, स्वप्रज्ञादोषात्तु न तव सम्यक् परिणत इति कोऽत्र मम दोष इति । 'अत्थ-सत्थे-कप्पओ दहिकुडउच्छुकलावस्से'त्यादि ( ४२४-२ ), अर्थशास्त्र-नीतिशास्त्र तत्प्रावीण्ये कल्पको दृष्टान्त, कथानक चेदमुपरिष्टाद्योगसङ्ग्रहेषु न्यक्षेण वक्ष्यते, स्थानाशून्यार्थं च लेशत किञ्चिदुच्यते-पाटलीपुत्रनगरे नन्दाभि धानेन राज्ञा कल्पकाभिधानो निजामात्य कस्मिंश्चिदपराधे सकुटुम्बोऽन्धकूपे प्रक्षिप्त, तद्भोजनार्थं च कोद्रवकूरभृत शरावक पानीय च किञ्चित्प्रक्षिप्यते, तच्चाल्पमिति वैरनिर्यातनार्थं जिजीविषु कल्पक एवैको भुङ्क्ते न शेषाणीति कल्पक वर्जं सर्वाण्यपि मृतानि, नन्दश्च कल्पकबुद्धिबलेनैव राज्यमकरोद्, अतस्तमन्धकूपे क्षिप्त मत्वा समस्तप्रतिपक्षराजवर्गेण पाटलीपुत्रे वेष्टिते नन्द कल्पक स्मृतवान्, कथित च तत्पुरुषै -देव ! तत्र कूपे प्रक्षिप्त भक्तमद्यापि कश्चिद्गृह्णाति, तत कूपादाकृष्य कल्पक सप्रणय राज्ञाऽभ्यर्थितो-न भवद्बुद्धिमन्तरेणापदिय निस्तीर्यते तस्मात् कुरुष्व किञ्चिदुपाय, अत

कल्पकेनात्मीयपुरुषान् प्रेष्य नदीपरतटावासितसमस्तप्रतिपक्षराजवर्गस्याख्यापित-अर्वाग्भागान्नास्माद्यादिमागमिष्यामि परतस्त्वात्मीयमन्त्रिण प्रेषणीया येन नदीमध्ये सन्धानमुच्यते, समायातास्तथैव, कल्पकेनोक्त-इक्षुकलापकस्य मुष्टिबद्धस्याधस्तादुपरि च छिन्नस्य मध्ये किं भवति ? कुण्डे प्रक्षिप्तदध्नो नाऽधउपरिच्छिन्नस्य मध्ये किं भवति ?, इत्येवमसम्बद्ध जल्प किञ्चिद्विधाय प्रतिनिवृत्त , तैश्च मन्त्रिभिर्गत्वाऽऽत्मीयस्वामिभ्यो निवेदित, ते च राजानश्चिन्तयन्ति-नेत्थमसम्बद्ध कल्पको जल्पति कदाचिदपि, परमस्मदीया मन्त्रिणस्सर्वेऽपि तेन भेदिता , सम्भवति हि सर्व तत्पार्श्वे सकलबुद्धिसम्पन्नत्वाद्, यदिनाऽसौ जीवतीत्यस्माभिर्ज्ञातमभविष्यत् तदा विग्रहमपि नन्देन सम न कश्चिदकरिष्यत्, तस्मादिदानीमप्यपसरणमेव श्रेय इत्येव विमृश्य सर्वे प्रनष्टा , इत्येव कल्पकस्य नीतिशास्त्रे प्रावीण्यमिति । 'लेहे जरा अट्टारसे'त्यादि (४२४-२), य किल लाटकर्णाटद्रविडदेशजादिलिपीनामष्टादशकमपि वेत्ति तस्य वैनयिकी, अथवा कश्चिदुपाध्यायो राजपुत्रान् पाठयति, ते च दुर्ललितत्वाल्लाक्षागोलकै क्रीडन्ति न पुनरधीयते, अत उपाध्यायेन स्वबुद्धिप्रकर्षात्तथैव क्रीडन्तोऽप्यमी यथा २ अक्षराण्येकद्वित्राद्यङ्काश्च निष्पाद्यन्ते तथा २ भूमौ गोलकप्रक्षेप कारयित्वा समस्तलिपीर्गणितञ्च ग्राहिता न च क्रीडारसस्तेषा निरुद्ध इत्युपाध्यायस्य वैनयिकी । 'खायजाणएण भणिय'मित्यादि (४२५-१), खात-कूपवाप्यादि तत्स्वरूपज्ञायकेन केनचिन्नैमित्तिकेन केषाञ्चित्कूपखननप्रवृत्तपुरुषाणा कथितम्, एतावद्दूरमवनौ खातायामत्र जलमुन्मीलयिष्यति, तैस्तावत्तस्मधिक खात तथापि जल न प्रादुरस्ति, ततो नैमित्तिकाय तैराख्यात-अतिक्रान्त भवत्कथित स्थान तथापि न पानीयमुन्मीलति, नैमित्तिकेन प्रत्यवाचि-यस्मिन्नेव प्रदेशे मया कथित तस्मिन्नेव जल केवल

तत्रैवैकस्मिन्प्रदेशे कूपतट ताडयत यूय थासकेन–कुद्दालकेनेत्यर्थ , तथैव तैरनुष्ठितम्, उद्भूत च तोयमिति नैमित्तिकस्य वैनयिकीत्येव चूर्ण्यक्षराणि मन्तव्यानीति । 'अणेगआसावहो'त्ति ( ४२४–६ ) अनेकानश्वानावहतीत्यनेकाश्वावह, तेन गृहे तिष्ठतोऽन्येऽप्यश्वा बहवो भवन्तीत्यर्थ । गर्दभोदाहरणे–कश्चिद्राजा तरुणवयस एव पुरुषान् स्वसन्निधौ धारयति न वृद्धान्, अन्यदा च स सैन्य कमपि शत्रुमनुधावितोऽसौ, अरण्ये च तोयमन्तरेण बाध्यमानायां सेनायामवृद्धदृष्टत्वेन तरुणपुरुषेषु जलस्थानान्यजानानेषु किमत्र कटके अस्ति कश्चिद्वृद्धो यो जलाशयान् जानीत इत्येव राज्ञा पृष्ट, तत्र चैकेन पदातिना पितृभक्तेन राज्ञ प्रच्छन्न स्वपिता वृद्ध आनीत आसीत, तेन च पृष्टेन सता राज्ञ कथित–यत्र किल खरश्चरणा घातान्प्रयच्छन् सादर भूमिमाजिघ्रति तत्र स्वल्पेऽपि खाते जलमवाप्यते इति वृद्धश्रुति , तथैव च खानिते तस्य राज्ञस्तोयशिरादर्शनमभूद्, अन्ये त्वाचक्षते–येन मार्गेण तोयगन्धमाजिघ्रन्तो रासभा जग्मुस्तन्मार्गमाश्रित्य नीत समस्तमपि सैन्य तेन वृद्धेन दृष्टश्च जलाशय इति, वृद्धस्य वैनयिकीत्येव चूर्ण्यक्षराण्युन्नेयानि । 'लक्षणोदाहरण' (४२४–८–लक्खणे वृ०), पारसविषये कस्यचिद्गृहे प्रभूतास्तुरङ्गमा , तेन चाश्वस्वामिना एतावदश्वसमूहमध्ये स्वेच्छयाऽश्वद्वय त्वया भृतौ वर्षान्ते ग्राह्यमित्युक्त्वा कश्चिदश्वरक्षको धृत , तस्य च तद्दुहित्रा सार्द्ध सङ्गतिरभूद्, वृत्तिकाले च समायाते अश्वरक्षकेन सा तद्दुहिता पृष्टा–अमीषा मध्ये कथय किमपि लक्षणयुक्तमश्वद्वय येन तद्गृह्णामि, तयाऽभिहितोऽसौ–सर्वेष्वश्वेषु अरण्ये विश्रब्धमुपविष्टेषु पोलचर्म्म –चर्ममयाधारविशेष स पाषाणखण्डाना भृत्वा उपरिष्टाद्वृक्षशाखातो मोक्तव्य तथा पटहस्तदग्रतो वादनीय इत्येव कृते यौ न समुत्त्रस्यतस्तथा खुक्खुरकेण–चर्म्ममयेन पाषाणखण्डभृतेन पृष्ठतो बाध्यमानेन सर्वानपि

याहय यौ दोषाश्ववाहनिकातोऽधिक निर्वहत तौ द्वावपि गृहाण, तेन सर्वं तथैव कृत्वा वेतनकाले–मून्यकाले अश्वस्वामी याचितो–ममामुकममुक चाश्व देहि, तुरङ्गमस्वामी तु समस्तलक्षणयुक्तौ ताविति कृत्वाऽऽह–एतद्वर्ज्जं दोषान् सर्वानपि गृहाण किमेताभ्यां करिष्यसि ?, स तु तद्वर्ज्जं नापर कमप्यश्वमिच्छति, ततश्चाश्वस्वामिना स्वभार्योक्ता–प्रदीयतामस्मै स्वपुत्रिका येन गृहजामातृत्व प्रतिपन्नो नाश्वौ गृहीत्वाऽन्यत्र व्रजति, सा च हीनोऽसाविति नेच्छत्यमुमर्थं, ततोऽश्वस्वामी भार्याऽवबोधाय वर्द्धकिसुत दृष्टान्तीकरोति, किमर्थमाश्रित्येति चेद् उच्यते–लक्षणयुक्तेन स्वगृहे धृतेन कुटुम्ब धनकनकादिना वर्द्धत इति, साम्प्रत स एव दृष्टान्तो भाव्यते–एकस्य कस्यचिद् भागिनेयस्य मातुलकेन वर्द्धकिना स्वदुहिता परिणेतु दत्ता, गृहजामाता च कृत , कर्म्मान्तर त्वसौ न किञ्चित्करोति, अतो वर्द्धकिदुहित्रा प्रेरित किमिति पुरुषमतरहित परदत्तमुपजीवस्तिष्ठसि ? विधेहि किञ्चित्कर्मान्तरमिति, कुठार गृहीत्वा काष्ठकर्त्तनार्थमटवीं गत , स्वाभिलषितकाष्ठमप्राप्य भायाद्य प्रतिदिवस रिक्त एव निवर्त्तते, षष्ठे च मासे लब्ध कृष्णचित्रककाष्ठ, तत्र च कुलक –कलशिकाचतुर्थीशरूपो धान्यमापकविशेषो घटित , तद्विक्रयार्थं च द्रव्यस्य लक्षेण देय इत्युक्त्वा स्वभार्याऽऽपणपथे प्रेषिता, सा च तन्मूल्ये लक्ष याचमाना लोकैरपहस्यते, अपरस्तु बुद्धिमान् वणिक्कश्चित् कारणेनेह भवितव्यमिति विमृश्य यावत्तेन धान्य मिमीते तावन्न कथञ्चित्क्षीयते अतो धान्याद्यक्षयनिमित्त लक्षमपि दत्त्वा तेन गृहीत , तत प्रभृति तेन सलक्षणजामातृकेन गृहे धृतेन सर्वमपि वर्द्धकिकुटुम्ब धनधान्यादिना वृद्धिमुपययौ, तथा त्वमपि निजदुहितर यद्यस्मै प्रयच्छसि तदाऽनेनास्मद्गृहे तिष्ठता समस्तलक्षणोपेतमश्वद्वयमपि तिष्ठति, तदश्वद्वयमाहात्म्येन च सर्वा सम्पद करस्था एव भवन्ति अस्माकमित्यादि

दापिता तस्मै दुहितेत्यत्र अश्वाधिपतेर्वैनयिकीत्येव सभावार्थो चूर्ण्यक्षरगमनिका । 'तेणसीवणीए'त्ति बहुविधमुक्त्वा नष्टसीयन्येतियावत्। किमिति तेन वैद्येन स्तोक विषमानीतमित्याशङ्क्याह–'ज कि बहुणे'- (४२५–१) तस्करसीवनिकया कि निस्सारेण वस्तुना विषेणान्येन वा बहुनाऽपि क्रियते ? प्रतिपक्षदर्शनेनापि त्यादि ( ४२५–६ ), यद्–यस्मात्कारणात् अपि तु प्रतिपक्षोऽपि सार एव प्रदर्शनीय स्वल्पोऽपि, यथा तेन वैद्येन विषप्रतिपक्ष स कश्चि निस्सारेण कि बहुना ? येन शतसहस्रजन्तुवेध्यपि विष झगित्येव निवर्त्तितं, तस्मान्न स्वल्प बहु वा वस्तु चिन्त स्प्रधान स्वल्पोऽप्यगदो दर्शितो आयो लाभो निष्पत्तिरितियावत् तदुपाये यत्कुशलत्वं तस्यैव दर्शन–प्रकटन कर्त्तव्य, नीय, कि तु विवक्षितस्य वस्तुनो य ? येनैव विवक्षितकार्यनिष्पत्तिस्तत्रैव यत्नो विधेय इति भावार्थ । 'सुधिय भणति एततुक्त भवति–किमल्पबहुत्वविचारेण ( ४२५–१६ ), शुष्कामपि–अनार्द्रामपि स्नानशाटिका ते कुमारा शीतलामपि व्यपदि- अहो सीया साडी'त्यादि अहो सुदीर्घमिद, क्रौञ्चनामा जीवविशेष स किल शेषदिवसेषु स्नानाव- ष्टवन्त , तृण च द्वाराभिमुख कृत्वा व्यपदिशन्ति प्रदक्षिणीकृत्याऽऽरात्रिकवदवतार्यते तत्र च दिवसे विपर्ययेणावतारित , एव कुमारैरनुष्ठि साने मङ्गलार्थमुपाध्यायस्य ? चेद् उच्यते–शीतला शाटिकेति ब्रुवाणै कुमारै स्वमातापित्रादीनि मा प्रति शीत- तेऽवगतमुपाध्यायेन–कथमिति दीर्घतृणदर्शनेन च मम पलायनार्थ दीर्घ पन्था प्रदर्शित , क्रौञ्चविपरीत्यावतारणेन तु लानि–विरक्तानीति सूचित, तथा चाह–'सीयाण'ति ( ४२६–२ ) श्मशानसात्कर्त्तु मृगयन्ति–मारयितुमिच्छन्तीत्यर्थ , वैपरीत्येन मरणमावेदित मम, हि कौञ्चावतारणादिकृत्यानि किल मृतस्यैव क्रियन्ते न जीवत इति निश्चित्य प्रपलाययामास उपाध्याय इति, कुमाराणा

वाहय यौ शेषाश्ववाहनिकातोऽधिक निर्वहत तौ द्वावपि गृहाण, तेन सर्वं तथैव कृत्वा वेतनकाले-मूल्यकाले अश्वस्वामी याचितो-ममामुकममुक चाश्व देहि, तुरङ्गमस्वामी तु समस्तलक्षणयुक्तौ ताविति कृत्वाऽऽह-एतद्वर्ज्जं शेषान् सर्वानपि गृहाण किमेताभ्या करिष्यसि ?, स तु तद्वर्ज्जं नापर कमप्यश्वमिच्छति, ततश्चाश्वस्वामिना स्वभार्योक्ता-मदीयतामस्मै स्वपुत्रिका येन गृहजामातृत्व प्रतिपन्नो नाश्वौ गृहीत्वाऽन्यत्र व्रजति, सा च हीनोऽसाविति नेच्छत्यमुमर्थं, ततोऽश्वस्वामी भार्याऽवबोधाय वर्द्धकिसुत दृष्टान्तीकरोति, किमर्थमाश्रित्येति चेद् उच्यते-लक्षणयुक्तेन स्वगृहे धृतेन कुटुम्ब धनकन कादिना वर्द्धत इति, साम्प्रत स एव दृष्टान्तो भाव्यते-एकस्य कस्यचिद् भागिनेयस्य मातुलकेन वर्द्धकिना स्वदुहिता परिणेतु दत्ता, गृहजामाता च कृत , कर्म्मान्तर त्वसौ न किञ्चित्करोति, अतो वर्द्धकिदुहित्रा प्रेरित किमिति पुरुषव्रतरहित परदत्तमुपजीवस्तिष्ठसि ? विधेहि किञ्चित्कर्मान्तरमिति, कुठार गृहीत्वा काष्ठकर्त्तनार्थमटवीं गत , स्वाभिलषितकाष्ठप्राप्त्य भावाच्च प्रतिदिवस रिक्त एव निवर्त्तते, षष्ठे च मासे लब्ध कृष्णचित्रककाष्ठ, तत्र च कुल्क -कलशिका चतुर्थांशरूपो धान्यमापकविशेषो घटित , तद्विक्रयार्थं च द्रव्यस्य लक्षेण देय इत्युक्त्वा स्वभार्याऽऽपणपथे प्रेपिता, सा च तन्मूल्ये लक्ष याचमाना लोकैरपहस्यते, अपरस्तु बुद्धिमान् वणिक्कश्चित् कारणेनेह भवितव्यमिति विमृश्य यावत्तेन धान्य मिमीते तावन्न कथञ्चित्क्षीयते अतो धान्याद्यक्षयनिमित्त लक्षमपि दत्त्वा तेन गृहीत , तत प्रभृति तेन सलक्षणजामातृकेन गृहे धृतेन सर्वमपि वर्द्धकिकुटुम्ब धनधान्यादिना वृद्धिमुपययौ, तथा त्वमपि निजदुहितर यद्यस्मै प्रयच्छसि तदाऽनेनास्मद्गृहे तिष्ठता समस्तलक्षणोपेतमश्वद्वयमपि तिष्ठति, तदश्वद्वयमाहात्म्येन च सर्वा सम्पद करस्था एव भवन्ति अस्माकमित्यादि

कोऽत्र मम दोष इति ?, एव विवादे द्वावपि राजधानीं प्रति गन्तु प्रवृत्तौ, मार्गे चाश्वासतितेन केनचिद् अकृतपुण्य पुमानुक्त –एन प्रपलायमानमश्व व्यावर्त्तय, तथैव तेन कृते मर्माहतोऽश्वो मृत तेनाप्यसौ गृहीत , एव त्रयोऽपि जना राजधान्या वहिस्ताद्वटवृक्षस्याधस्ताद्रात्रावुषिता , अपरेऽपि लोमन्थिका –नटास्तत्रैवोषिता , अकृतपुण्यपुरुषेण चानयोर्यावज्जीव दासोऽह भविष्यामीति विचिन्त्य वटवृक्षे दण्डीखण्डेनोल्लम्बित, त्रुटिते च तस्मिन्नधोवर्त्तिनटमहत्तरो निपतता व्यापादितो, अतस्तैरपि नटै प्रारब्धोऽसौ, तत सर्वैरपि यथावृत्तव्यतिकरेऽमात्यस्य कथिते तमकृतपुण्यपुरुष निष्प्रतिभ दीनवदनमनुकम्पास्पद दृष्ट्वा कृपया सञ्जाततत्पक्षपातो निजगाद सचिवो–ददात्येष वलीवर्दान् केवल यैर्मुच्यमाना वाटके वलीवर्दा दृष्टास्तानि वलीवर्दस्वामिनो नेत्राणि उत्खातयामि, अश्वस्वामिनो यया जिह्वयेदमुक्त–निवर्त्तयैनमश्व तामुत्पाटयामि ततो दास्यत्यश्वमसौ, नटास्त्वभिहिता , तस्यैव वटवृक्षस्याधस्तादय शेते भवता मध्यात्कश्चिदुल्लम्बयतु इत्येवमभिहितास्त परित्यज्य सर्वे प्रणष्टा इति चूर्ण्यक्षरभावार्थ । 'डोवदृष्टान्तो' ( ४२७–९ ), यथा काचित्परिवेशनकर्त्री प्रथममेव जानाति एष एतावन्मात्रया दीयमानः सर्वेषामेकस्मिन्माने भविष्यति अतस्तावन्मात्र २ डोवे कृत्वा ददातीत्यर्थ । 'मौक्तिकदृष्टान्तो' ( ४२७–९ ), यथा कश्चिन्मौक्तिकानि शूकरवाले प्रोतयस्तथाऽऽकाशे मौक्तिकमुल्लालयति यथा शूकरवालमुखेन तच्छिद्र सयुज्यत इति । 'पचउ'त्ति ( ४२७–१० ), प्लवको–नट इतियावत् । तुन्नाकः अभ्यासोत्तरकाल पश्चादतिसूक्ष्माणि तूनयति यथा श्रीमन्महावीरसम्बन्धि वस्त्र धिग्जातीयेन तुन्नाकसकाशात् तथा तुन्नापित यथा न केनचिल्लक्षित, शूच्या च तुन्नाको निरीक्ष्य कश्चित्तावन्मात्रं दवरक गृह्णाति यावता विवक्षितवस्त्रच्छिद्र पूर्यते न हीनाधि

तया सूचयता उपाध्यायस्यापि तथैव निश्चिन्वतो वैनयिकी । 'नीव्रोदकोदाहरण' ( ४२६-२ ), काचिद्वणिग्भाया चिरप्रोषिते स्वभर्त्तरि मन्मथव्यथितान्त करणा दास्या सद्भावभारयातवती-समानय कश्चिदुपपतिं, न शक्नोमि सोढुमत्र ह्यनिरोधमिति, तयाऽपि कश्चिदन्विष्य समानीत, स च नखप्रक्षालनाद्यावश्यकम्-अवश्यकरणीयतारूप कारितो रात्रौ च गृह प्रवेशित, स च पानीय पातुमिच्छस्तदेव प्रत्यासन्न प्राप्त नासीद्वाऽन्यज्जलमित्यादिषु तश्चिरकारणात् नीव्रोदक पायित, तच्च किलोदक नीव्रमध्यवर्त्तिविषविषसर्प्पशरीर स्पृष्ट्वाऽधस्तान्निपपात, विषदिग्धजलपानाच्च मृतोऽसौ, तया च वणिग्दयि तया रात्रावेव नगरबहिर्वर्त्तिदेवकुलिकाया त्याजित, त चाभिनवप्रक्षालितनख दृष्ट्वा नगरामात्येन नापिता सर्वेऽप्याका र्योक्ता -केन भवता मध्येऽस्य नखा प्रक्षालिता ? कस्मिन् वा देशे स्थितस्येत्याद्यापृष्टे तन्मध्यादेकेन जगदे-अमुकवणि ग्दासीवचनात्सर्वमावश्यकमिद मया कृत, अत सा दासी राजपुरुषै ग्रहता, तया च वणिग्भार्या निरदेशि, सा चामात्येना- कार्यं पृष्टा-किमिद ?, तया कथित-न जानामि किञ्चित्, केवल नीव्रोदक पीतमनेन निशाया, अतो निश्चितममात्येन- भवितव्य नीव्रेषु विषधरेण एतन्मरणान्यथानुपपत्ते, प्रलोकितो नीव्रप्रदेशो दृष्टश्च त्वग्विषसर्प्प इत्येष चूर्ण्यक्षरभावार्थ । 'गौणे' त्याद्युदाहारण ( ४२६-५ ), कश्चिदकृतपुण्यो य य व्यवसायमारभते स स विपद्यते, ततो मित्राद् याचितबलीवर्दै सकल दिवस हल वाहयति रात्रौ पुन समर्प्पयति, अन्यदा तु सन्ध्याया तत्समर्प्पणार्थमायातो मित्र च भुञ्जान दृष्ट्वा लज्जया न समीपमायात केवल तस्य पश्यतस्तदीयवाटके प्रक्षिप्ता बलीवर्द्दौ, तेन च मित्रेण न मङ्गोपितास्ततो वाटका न्निर्गतास्तस्करैश्चापहृता, ततोऽसौ अकृतपुण्यस्यैव पार्श्वे याचितवान्, स तु प्राह-मया तव पश्यत एव मुक्ता इति मम

दोषमुद्भाव्य चाणाक्येन सर्वोऽपि ग्रामो दाह प्रापित इति भावार्थ । 'इयपाउयाउ'त्ति-(४३७-१६-इदपाउ चू० ), या पूर्वमिन्द्रकुमारिका इत्युक्ता चाणक्येन नगरात्स्वबुद्ध्या निष्कासितास्ता एव नामान्तरत इन्द्रपादुका इतीहावगन्तव्या इति उक्तो बुद्धिविचार ॥ 'न तु शुभस्य स्वरूपस्यैवे'ति ( ४३९-१९ ), एवम्भूतस्यैवाशुभरूपस्य ससारानुबन्धिन कर्म्मण एव क्षयो युज्यते न तु यथा सर्वथा सन्तानोच्छेदवादिभि सौगते 'दिश न काञ्चिदि'त्यादिवचनत शुभस्य जीवस्वरूपस्याप्युच्छेदोऽभ्युपगम्यत इत्यत्राभिप्राय इति । 'स हि योगनिरोध कुर्वन् प्रथममेवे'त्यादि ( ४४१-५ ), स हि भगवान् केवली योगत्रयनिरोध चिकीर्षुर्विषमिव मन्त्रेण प्रथममेव तावत्तद्व्यापार निरुणद्धीति सम्बन्ध , तस्या-मन - पर्याप्तिनिर्वृत्ते शरीरसव्यपेक्षजीवस्य मनोद्रव्यग्रहणशक्तिरूपाया योऽसौ बाह्यघटादिवस्तुचिन्तनरूपो व्यापार प्रथम तावत् त निरुणद्धीत्यर्थ , केन कृत्वेत्याह-'अनुत्तरेणे त्यादि ( ४४१-७ ), अनुत्तरादिविशेषणविशिष्ट किल सिद्धानामपि वीर्य भवति तद्व्यवच्छेदार्थमुक्त-करणवीर्येण-शरीरजवीर्येणेत्यर्थ , तस्या व्यापार निरुणद्धि, या किमित्याह-'याऽसौ शरीरे'-त्यादि, पुनस्तामेव विशेषयति-'यथा पूर्व'मित्यादि, किमर्थ पुनस्तद्व्यापार निरुणद्धीत्याह-तस्या-मन पर्याप्तिनिर्वृत्तेर्य-त्कारणभूत कर्म्म तेन जीवस्य य सयोगस्तद्विघटनाय, न ह्यविकले तत्कारणभूते मन पर्याप्तिनामकर्मणि तत्कार्यभूताया मनोद्रव्यग्रहणशक्तेर्निरोध शक्य कर्तुमिति भाव । 'निरुध्य चे'ति, मनोव्यापार उपलक्षणत्वाद् वाक्कायव्यापार च निरुध्य तत शैलेशीभावनामेतीति सम्बन्ध , अथ मनोव्यापारादिनिरोधे क क्रम इत्याह-'पज्जत्तमित्ते'त्यादि ( ४४१-९ ), व्याख्या-पर्याप्तिसमर्थनोत्तरकालमेव जघन्ययोगिन सज्ञिनो यावन्ति मनोद्रव्याणि-चित्तावष्टम्भकमनोवर्गणादलिकानि

कमिति। 'पज्जोओ रायगिह'मित्यादि-( ४२८-११ ), चण्डप्रद्योतो राजा राजगृहनगरमादि तदावासभूमौ च प्रथम-
मेव निधानानि स्वयमेव निक्षेप्याभयकुमारेण पश्चाद्भेदयित्वा तदीयस्कन्धावारनिवेशनायकपुरुषपार्श्वाद्दारयापित चण्डप्र-
द्योतस्य-त्वदीयसामन्ताः सर्वेऽपि श्रेणिकेन भेदिता, अन्यथा शोध्यन्ता तदीयावासभूमयो यदि श्रेणिकप्रयुक्तनिधानानि
न लभ्यन्त इति, तद्वच श्रुत्वा प्रपलानश्चण्डप्रद्योत इत्यभयस्य पारिणामिकी। 'मुल्लघडियाहि'त्ति ( ४३०-२ ) यासु
वचनोक्तिषु करमुत्क्षिप्योत्क्षिप्यासभ्यवाक्यै परो धृष्यते ता मुरलमर्दिकास्ताभिर्वञ्चिता-अपमानिता। 'उववास
करेइ'त्ति ( ४३०-५ ), स उदितोदयो राजा वैश्रमणाराधनायोपवास चक्रे, वैश्रमणेनापि तदीयश्रावकत्वपरितोषितमा-
नसेन धर्मरुचिराजः सहत्य स्वनगरे वाणारसीलक्षणे प्रक्षिप्त। 'सद्दीवइस्स'त्ति ( ४३३-११ ), शालकीपतिरिति-
नन्दस्य विरुदमिद। 'पाओ पढमो उक्खित्तो'त्ति ( ४३३-१४ ), प्रथम प्रतिज्ञाश्लोक उत्क्षिप्तश्चेतसा अन्यदा तु
तमेव प्रकट पठितवान् "कोपेन भृत्ये"श्चेत्यादि। 'इमो य उपस्थाती'त्यादि ( ४३४-७ ), चन्द्रगुप्त पद्मसरसि प्रवे-
शित स्वय तु चाणाक्यस्तत्तीरे देवार्चन करोति, तत्र च किल मौनेनाह देवतामर्चयामीति ख्यापयन् केनचिन्नन्दपुरुषेण
चन्द्रगुप्त पृष्ट सन् शिरश्चलनसञ्ज्ञयैव कथयत्यग्रतोऽसाविति 'आणाए वसीहि अयगे'त्यादि ( ४३५-७ ), इह
किलैकस्मिन् ग्रामे भिक्षाटन कुर्वता पूर्वं चाणाक्येन भिक्षा न लब्धाऽऽसीद् अत प्रत्यपकार करोमीति क्षुद्रादेशस्तद्ग्रामे-
यकाना दत्तो यथा चूतान् कर्त्तयित्वा वशजालीना वृत्तिर्विधेया, ग्रामेयकै पुनर्न कथनापि वशाना चूतैर्वृत्ति कारयति
ततो लेखकदोषादेवाय व्यत्ययोऽभूदिति विमृश्य वशीभूताना वृत्ति कृता, अतो मदीय वचोऽमीभिरन्यथा कृतमिति तमेव

तदानन्तर्यवृत्तिरेव प्रतिस्खलनमित्येव सभावार्थमिद व्याख्येयम्, अत एवोक्तं–'सूक्ष्मधिया भावनीय'मिति । 'गतूण जोअण जोयण तु परिहाइ अगुलपुहुत्त'मिति ( ४४३–१५ ), अत्राङ्गुलपृथक्त्व जिज्ञासुना त्रैराशिकमनुसरणीय, तत्रेय करणकारिका–"आद्यन्तयोस्त्रिराशावभिन्नजातीप्रमाणमित्सा च । फलमस्य जातिमध्ये तदन्त्यगुणमादिमेन भजेत् ॥ १ ॥" भावना त्वियम्–अत्र सार्द्धद्वाविंशतियोजनलक्षाणि गत्वा यद्यष्टौ योजनानि हीयन्ते तदैकस्मिन् योजने किं परिहीयते ?, स्थापना—| २२५०००० । ८ । १ | अत्र चान्त्येनैककेन मध्यवर्त्तिनो अष्टौ गुणितास्तावन्त एव भवन्ति एतानि चाष्टौ योजनान्याद्यराशिना विभक्तव्यानि न च भाग प्रयच्छन्ति अतोऽङ्गुलानि क्रियन्ते, तत्रैकस्मिन् योजने अष्टषष्टिसहस्राधिकससलक्षाण्यङ्गुलाना भवन्ति अतोऽष्टसु योजनेष्वयमङ्गुलराशिर्भवति ६१४४०००, अस्य राशे सार्द्धद्वाविंशतिलक्षस्वरूपाद्यराशिना भागेऽपहृते किञ्चिन्न्यूनमङ्गुलत्रय लभ्यते तदेव चेहाङ्गुलपृथक्त्वशब्देनोक्त द्रष्टव्यमिति, इद चेहाविशेषेणोक्तत्वादित्थ व्याख्यायते यावता प्रज्ञापनाया द्वितीयस्थानपदे मध्यभागवर्त्त्यष्टयोजनेषु हानिनिषिद्धेव अतस्तन्मतेन मध्यभागाष्टयोजनवर्ज्जा शेषक्षेत्रस्य हानिर्द्रष्टव्येति । 'पृष्ठतोऽर्द्धावनतादि'रिति ( ४४३–२८–पृष्ठतो वा अर्धा० ), आदिशब्दाद्न्यस्तपृष्ठस्योत्तानस्य परिग्रह निषण्णश्चोपविष्ट उच्यते । उत्कृष्टापि पञ्चधनु शतेभ्यस्त्रिभागे पातिते सति सत्रिभागत्रयस्त्रिंशदधिकधनु शतत्रयमानैव सिद्धानामवगाहना भवतीति । 'किह मरुदेवीत्यादि गाथा ( ४४४–१७ ), यद्युत्कृष्टतोऽपि पञ्चधनुश्शतमान एव सिध्यति नाधिकमान तत्कथ मरुदेव्या मान पञ्चविंशत्यधिकपञ्चधनु शतलक्षणमुपपन्न स्याद् ?, आचार्य आह–नाभे. कुलकरात्सकाशाद् येन किञ्चिन्न्यूनासौ ज्ञातव्या, एतदुक्त भवति–यद्यपि पञ्चवि

तद्व्यापारश्च-मनोद्रव्यव्यापारश्च चिन्तनीयानुकूलचेष्टालक्षणो वा यावान् भवति केवलिनोऽपि शैलेश्यवस्थाप्राप्तिसमये तावन्ति मनोद्रव्याणि तद्व्यापारश्च तावानेव भवति, इदमुक्तं भवति-शैलेशीमारुरुक्षु केवली प्रथममेवाचिन्त्यसामर्थ्य-वीर्यविशेषाज्झगित्येव पर्याप्तमात्रजघन्ययोगिसंज्ञिपञ्चेन्द्रियमनोयोगतुल्य मनोयोग धरति, ततश्च तस्मादपादीयमान-मनोयोगाद् असंख्येयगुणविहीन प्रतिसमय निरुन्धानोऽसंख्येयसमयैः सर्वमपि मनोयोग निरुणद्धि, अपादीयमानमनो-योगात्प्रतिसमयमसंख्येय २ भागमपनयन्नसंख्येयसमयैः सर्वमपि मनोयोग निरुणद्धीत्यर्थ इति गाथाद्वयार्थ । एव वाग्योगमपि विशिष्टवीर्यविशेषात्पर्याप्तमात्रद्वीन्द्रियजघन्यवाग्योगतुल्य प्रथममेव विधृत्य, तथा काययोगमपि प्रथमसमयो-त्पन्नसूक्ष्मपनकजघन्यकाययोगतुल्य विधृत्य ततस्तदसंख्येयगुणविहीन प्रतिसमय निरुन्धानोऽसंख्येयसमयैः सर्वं वाग्योग देहित्रिभाग च मुञ्चन् सर्वं काययोग निरुणद्धि, निरुध्य च शैलेशीं प्रतिपद्यत इति गाथाचतुष्टयतात्पर्यार्थ । अन्ये त्वन्य-थापि व्याचक्षते, प्रज्ञापनादिभिर्विसंवादित्वाच्च तन्नेह प्रदर्श्यत इत्यल प्रसङ्गेनेति । 'तदानन्तर्येवृत्तिरेव प्रतिस्खलन'-मित्यादि ( ८८२-२० ), तस्य-अलोकाकाशस्यानन्तर्येण-अव्यवहितत्वेन या वृत्ति-अवस्थिति सैवालोकेन सिद्धाना प्रतिस्खलन न पुनरीश्वरादेरिव स्तम्भादिना सार्द्धं सम्बन्धे सति प्रतिघात, सम्बन्धस्यैवानुपपत्ते, तथाहि-एकैकस्य जीव प्रदेशस्यैकैकेनालोकाकाशप्रदेशेन सह सम्बन्धो भवन् सर्वात्मना वा भवेत् देशात्मना वा ?, यदि सर्वात्मनेति पक्षस्तदा जीवप्रदेशस्य सर्वात्मनाऽऽकाशप्रदेशेन सम्बद्धत्वादेकत्वप्रसङ्ग, अथ देशात्मनेति पक्ष, तदा प्रदेशेष्वपि प्रदेशप्रसक्ति, तदयुक्त, यदाह-'प्रदेशाना निष्प्रदेशत्वा'दिति न हि प्रदेशेष्वपि प्रदेशा सन्ति इत्येवं पक्षद्वयेऽपि सम्बन्धाभावात्

ङ्गुलपृथक्त्वै कैश्चिज्जघन्य सप्तहस्तलक्षण मान हीनमपि स्याद्, उत्कृष्टमपि पञ्चधनुश्शतलक्षण मानमभ्यधिकमपि कैश्चि-
द् धनु पृथक्त्वैर्भवेदिति यथासङ्ख्य सम्बन्ध , ततश्च यद्यपि कैश्चिद्धनु पृथक्त्वैर्मरुदेव्या शरीरमानमभ्यधिक तथापि न
कश्चिद्दोष इति गाथार्थ , किञ्च—सप्तहस्तमानादधस्तात् पञ्चधनुश्शतेभ्यश्चोपरि वर्त्तमानस्य यत्कस्यचिज्जीवस्य सिद्धिगमन
तदाश्चर्यप्रायमिति यद्यपि सामान्यमुमुक्षुजीवशरीरमानप्रतिपादके सूत्रे न निवद्ध तथापि पञ्चशतादेशवचनवत्प्रमाणयित-
व्यमेव, न हि पञ्चशतान्यादेशाना क्वचित्सूत्रे निवद्धानि न च तानि न प्रमाणमिति, आह च—'अच्छेरयादि'इत्यादि,
(४८४–२१), गाथा व्याख्यातैव, नवरमाश्चर्यादीत्यादिशब्दात्प्रविरलजीवभावित्वादिपरिग्रह । 'केनचित् प्रकारेणा-
लौकिकेनास्थित'मिति (४४५–२), ननु यदिह सस्थान तत् तत्रापि धनप्रदेश सत् सिद्धानामनन्तरमेवोक्त, तथाहि—
ज सठाण तु इह भवं चयतस्स चरमसमयंमि । आसी अ पएसघण त सठाण तहि तस्स ॥१॥ इति (गा० ९६९) कथं
न विरोध ? इति, नैव, अभिप्रायापरिज्ञानाद्, यथा ह्यमूर्त्तत्वेन नभस स्वत आकाराभावेऽपि चतुरस्रगृहद्वाराद्यर्था-
यच्छिन्नस्य तस्यापि परोपाधितश्चतुरस्राद्याकारता कल्प्यते तथा सिद्धानामपि प्रागौदारिकशरीरपरिच्छिन्नजीवप्रदेशापेक्षया
परोपाधित सस्थानमुच्यते न पुनस्तेषा स्वत सस्थानमस्ति अमूर्त्तत्वात् सस्थानस्य च मूर्त्तवस्तुधर्म्मत्वादिति न कश्चिद्वि-
रोध इति । 'सिद्धस्स सुहो रासी सव्वद्धापिडिओ जइ हवेज्जा'इत्यादि (४४६–१४) गाथाया सर्वाद्धाशब्देन
सादिरपर्यवसित सिद्धसम्बन्ध्येव कालो गृह्यते न सामान्य सर्वोऽपि काल , तद्ग्रहणे हि वक्ष्यमाणमनन्तैर्वर्गमूलैरपवर्त्तनम-
सङ्गत स्याद्, यदि हि सर्वकालसमयराशिना गुणयित्वाऽपि पुनरपवर्त्तनीयो राशि तर्हि तद्गुणनस्य कि फल ?, सिद्धसम्ब-

शत्यधिक पञ्च धनु शतानि नाभे शरीरप्रमाण तथा मरुदेव्या अपि "सघयण सठाण उच्चत्त चेव कुलयरेहिं सम"मित्यति देशात्तदेव प्राप्नोति तथापि पञ्चधनु शतमानैवासौ, सूत्रे हि कियन्मात्रेण हीनाधिकेऽपि लाघवार्थमनेकस्थानेषु दृश्यन्ते एवातिदेशा इति भाव, अथवा भवतु नाभिशरीरप्रमाणा तथापि करिस्कन्धावरूढत्वात्सङ्कुचितगात्रा सिद्धेति न यथोक्ता-वगाहनाविरोध इति गाथार्थ । जघन्यावगाहनाया विप्रतिपत्तिमाविष्कुर्वन्नाह पर –'सत्तूसिएसु इत्यादि ( ४४४–१८ ), ननु प्रज्ञापनादिग्रन्थेषु जघन्यपदेऽपि सप्तहस्तोच्छ्रितस्यैव सिद्धिरुक्ता अत कथमिह जघन्यतो द्विहस्तशरीरमानस्य मुक्ति रुच्यमाना न विरुध्यते ?, एव परेणोक्ते पश्चार्द्धेनोत्तरमाह–'किले'ति वृद्धवादसूचाया एव किल वृद्धा व्याचक्षते–सा प्रज्ञापनाद्युक्ता सप्तहस्तप्रमाणा जघन्यावगाहना तीर्थकृतामेव द्रष्टव्या, जघन्यपदेऽपि तीर्थकर सप्तहस्तमान एव सिद्ध्य-तीत्येवविपर्ययेतिभाव , तीर्थकरव्यतिरेकेण तु शेषजीवाना सिद्ध्यता–सिद्धिमासादयता जघन्यपदे याऽनोक्ता द्विहस्तप्र-माणाऽवगाहना सैव द्रष्टव्येति वाक्यशेष इति गाथार्थ , के पुनस्ते ये द्विहस्ता सिद्धा इत्याह—'ते पुणे'त्यादि (४४४–१९), ते पुनर्जघन्येन द्विहस्तप्रमाणा कूर्म्मपुत्रादय सिद्धा भवेयु , अन्ये पुनरभिदधति–सप्तहस्तप्रमाण एव यो मयूरबन्धा-दिना सवर्यं वद्धो यन्त्रे वा निपीड्यमान सङ्कुचितो द्विहस्तीभूत सन् सिद्ध्यति तस्यैव जघन्या द्विहस्तप्रमाणावगाहना प्राप्यते न पुन स्वरूपतोऽपि कश्चिद्द्विहस्त सिद्ध्यतीति गाथार्थ , किञ्च–प्रायोवृत्तिमाश्रित्य जघन्यतः सप्तहस्ता उत्कृष्ट-तस्तु पञ्चधनु शतानि सूत्रे मानमुक्त इतरथा हीनमप्यधिक वा कियताऽपि कस्यचित्स्यादेवेत्याह—'बाहुल्लओ य'इत्यादि (४४४–२० ), बाहुल्यमाश्रित्य सूत्रे सप्त हस्ता जघन्य पञ्चधनु शतानि चोत्कृष्ट मानमुक्तम् इतरथा कस्यचिज्जीवस्या-

सवादि स्थाने २ प्रोक्तमेवेत्युक्त भवति येन च ग्रन्थेनोक्त स स्वयमेवोभ्यूह्यमिति । 'कुट्टिमादौ विचित्राणी'त्यादि ( ४४७-१० ) श्लोकव्याख्या—कुट्टिमे-स्वच्छकान्तिभृन्मणिनिचयखचितभूतले आदिशब्दादादर्शगृहे च सङ्क्रान्तानि विचित्राणि-विशिष्टनानावेषधारीणि विलासवन्त्यत एव लोचनानन्ददायीनि स्वकीयरूपाणि निजशरीराणि दृष्ट्वा द्रष्टव्य कौतुकनिवृत्तेस्तत्रानुत्सुको भवतीति श्लोकार्थ । 'अम्बरे'त्यादि ( ४४७-११ ), अम्बरशब्देनात्र मत्स्यमदोऽभिधीयते, स हि किलात्यन्तसुगन्धो भवति, शेष सुगमम् । 'वस्तुत सिद्धपर्याये'त्यादि ( ४४७-२९ ), यद्यपि सिद्ध कृतकृत्य उच्यते बुद्धस्त्वयगततत्त्व इत्यादिक किञ्चिदभिधेयभेद बिभ्रति वक्ष्यमाणशब्दा तथापि वस्तुत -परमार्थत सिद्धपर्याया एव, एकस्मिन्नर्थे सर्वेषा वृत्तत्वादितिभाव । 'आदिशब्दाद्द्रव्यभूत आचार्य'इत्यादि ( ४४८-१४ ), यदा कश्चिल्लोको त्तरदर्शनप्रपन्नोऽपि विशिष्टधर्मकथाद्याचार्यकार्याक्षमो दृश्यते तदैव व्यपदेश प्रवर्त्तते-द्रव्यभूतोऽयमाचार्य , आचार्या भास इत्यर्थ इति । 'अन्ये त्वेव भेदमकृत्वे'त्यादि ( ४४८-१७ ), अन्ये तु लौकिकलोकोत्तरभेदाद् भावाचार्यो द्विधे त्येव न भेद कुर्वते, किन्तु लौकिक सर्वोऽपि द्रव्याचार्यपक्षेऽन्तर्भवतीत्यभिदधति । 'योगप्राधान्यख्यापनार्थ'मिति ( ४४९-२७ ), एतदुक्त भवति-यद्यपि "निघाणसाहए जोए" इत्युक्ते सर्वभूतसमताऽपि लभ्यते तस्या अपि निर्वाणसा-धकत्वात् तथापि निर्वाणसाधकयोगेषु मध्ये सर्वभूतसमतैव प्रधान तदङ्गमित्येवं प्राधान्यख्यापनार्थ "समा य सव्वभूएसु इत्यनेन तस्या पृथगुपादान कृतमिति । 'इहास्या गाथाया'इत्यादि ( ४५०-११ ), इहास्या "न सखेवो न वित्थारो" इत्यादिगाथाया सम्बन्धिना "न सखेवो" इत्यनेन पाठेन सह विरुध्यते, किं तदित्याह-लक्षण, क यदुक्त लक्षणमित्याह—

न्धिकालग्रहणे तु सर्वाद्धापिण्डित इति किमुक्त भवति ?–सर्वेणापि साद्यपर्यवसितेन कालेन यत्सुख सिद्ध प्रतिसम-
यमनुभवति तद् यद्येकत्र संपिण्ड्यासत्कल्पनया राशि क्रियत इति, स च राशिरनन्तवर्गापवर्त्तित इत्यनन्तैर्वर्गमूलै-
स्तावदपवर्त्तितो यावत् सर्वाद्धालक्षणगुणकारेण यदधिक जातमासीत् तस्य सर्वस्याप्यपवर्त्तनेन समीभूत सिद्धत्वाद्य-
समयमात्रभाविसुखरूपतां प्राप्त इत्यर्थ, एतावन्मात्रोऽपि सर्वाकाशे न माति सर्वस्तु दूरापास्त एवेति ज्ञापनार्थं च पिण्ड-
यित्वा पुनरपवर्त्तन सुखराशेरिति, एतदेव भावयति–'इह किल विशिष्टे'त्यादि (४४६–१७), एतदुक्त भवति–सर्वस्यापि
सुखशब्दवाच्यस्याह्लादरूपस्य सुखस्य सिद्धसुखमेव परमप्रकर्षप्राप्त भवति, तच्च केवलिप्रज्ञया परिच्छिद्यमान यावतोऽशान्
प्रयच्छति तावतोऽशा सर्वलोकालोकाकाशप्रदेशेभ्योऽप्यादिशब्दात् तत्पर्यायेभ्योऽपि भूयांस इत्यनया किल कल्पनानिर-
क्षयोक्त–'सिद्धाण सुहो रासी सव्वागासे न माइज्जे'त्यादि, अन्यथा यद्येव विवक्षामनपेक्ष्य मुख्यरूपतयैव सिद्धसुख
सर्वाकाशे न मातीत्युच्येत तदा कथमिति सूरयोऽभिदधतीति सम्बन्ध, कि तदित्याह–नियते देशे–क्रोशषड्भागलक्षणे तेषा
सिद्धाना अवस्थितिरिति, अयमभिप्रायो–यद्युक्तकल्पनाव्यतिरेकेण मुख्यवृत्त्यैव सिद्धस्य सुखराशि सर्वाकाशे न माती-
त्युच्येत तदा धर्मिणमन्तरेण धर्मस्याभावात् सिद्धोऽपि सर्वाकाशे न मातीति वक्तु युक्त स्यात् तत्कथ पूर्वसूरय क्रोश-
षड्भाग एव सिद्धावस्थानमभिदध्यु तस्माद्यथोक्तविवक्षयैव "सिद्धस्स सुहो रासी"त्यादि अभिहितमिति स्थित, न चैतन्मया
स्वमनीषिकयोच्यत इति दर्शयति–'तथा चैत'दित्यादि ( ४४६–२१ ), विद्यन्ते–ज्ञायन्ते जीवादय पदार्था अनेनेति
व्युत्पत्त्या वेदशब्देनेह सिद्धान्तोऽभिधीयते, ततश्च गौतमादिमहर्षिप्रणीते सिद्धान्तेऽपि एतत्संवादि–मदीयव्याख्यान

सूत्रस्पर्शकानिर्युक्तिरारभ्यते—'साम्प्रत सूत्रोपन्यासार्थ'मित्यादि ( ४५४–१० ), सूत्रोपन्यासार्थ वस्तुत सूत्रस्पर्शनिर्युक्तिगतामेव गाथामाहेति सम्बन्ध, ननु "नदिमणुओगे"त्यादिगाथया न कश्चित्सूत्रावयव स्पृश्यते तत्कथमिय सूत्रस्पर्शनिर्युक्तिगतेत्युच्यते ?, इत्याशङ्क्याह—'प्रत्यासत्तियोगादि'ति, एतदुक्त भवति, अनया गाथया सम्बन्धे घटितेऽनन्तरमेव सूत्रस्पर्शनिर्युक्तिर्भणिष्यत इति यद्यप्यनया न कश्चित्सूत्रावयव स्पृश्यते तथापि सूत्रस्पर्शकनिर्युक्तेरत्यन्त प्रत्यासन्नेति वस्तुतस्तद्गतेत्युच्यते । 'अहीनाक्षरमनत्यक्षर'मित्यादि ( ४५५–१ ), यद्यप्ये-तानि पदानि पूर्वं नन्द्यादौ व्याख्यातानि तथापि मन्दस्मृतिशिष्यानुग्रहाय लेशतो व्याख्यायन्ते–अहीनाक्षर–यत्र हीनमक्षरं न भवति, अनत्यक्षर–यत्राक्षरमधिक न भवति, व्यत्यासितवर्णविन्यास व्याविद्धाक्षरमुच्यते उत्क्रमप्रोतरत्नमा-लावत् न तथा अव्याविद्धाक्षर, उपलशकलाकुलावनौ हलवद् यदधीयान स्खलति तत् स्खलित न तथाऽस्खलितमुच्यते, असदृशधान्यमीलकवद् यत्र वर्त्तते तदमिलितमिति आख्यायते, 'प्राप्तराज्यस्य रामस्य राक्षसा निधन गता' इत्यादिवाक्य-वद् यदस्थानविरतिमन्न भवति तदव्यत्याम्रेडित, मात्राशकादिनियतमान प्रतिपूर्ण, उदात्तादिघोपसमन्वित प्रतिपूर्ण घोप वालमूकभणितवद् यदव्यक्त न भवति तत्कण्ठोष्ठविप्रमुक्तमुच्यते, वाचनोपगत नाम यद् गुरुदत्तवाचनयाऽधीत न पुन स्वयमेव पुस्तकमादाय पठितमिति ॥ 'अथवा पर' सन्निकर्ष'इति ( ४५५–५ ), यो विसन्धिभावेनोच्चारणरूप सन्नि-कर्ष स वा सहितेत्यर्थ, पदानि किल विसन्धिभावेनोच्चारयिष्यन्त इति सहितापदयोर्विशेष इति । 'निवासचितिशरी-रोपसमाधानेष्वि'ति ( ४५५–२८ ), एतेष्वर्थेषु चिनोतेरादे को भवति, एते च सर्वेऽप्यर्था अत्र च क्रायशब्दे व्युत्पाद्ये

छन्दोविचितिनाम्नि छन्द शास्त्र इत्यर्थं, कस्माद्विरुध्यत इत्याह–अग्नक्रमनियमात्–छन्द शास्त्रे ह्ययमग्रक्रमनियमोऽस्ति यदुत गाथाया प्रथमाशकश्चतुर्मात्रो विधेयो यथा–"नमिऊण जिणवरिंदे" इत्यादिगाथास्वाद्योऽशकश्चतुर्मात्रो भवति तद्यथा—नमिऊ (। । ऽ) अस्या तु गाथायामाद्योऽशक पञ्चमात्र प्राप्नोति तद्यथा—नसरे (। ऽ ऽ) तस्मादिहैव पाठो द्रष्टव्यो–नरि सवेयो इत्यादि, एव च सति सपद्यन्ते चतस्रो मात्रा प्रथमाशे, तद्यथा—नविस (। । ऽ) न च वकव्य पूरणार्थ एवायमपिशब्दो

न पुन सार्थको, यदाह–विद्यमानार्थो द्रष्टव्यो, विद्यमानार्थता च समुच्चयलक्षणामनन्तरमेवास्य व्यवहितसम्बन्ध कृत्वा वृत्तिकार एव यतोऽत्र न सक्षेपो नापि विस्तर इत्यनेन स्वयमेव दर्शयिष्यति, अत्राह–ननु यद्यपीत्थमतिविज्ञतामवलम्ब्य भवद्भि प्रथमोऽश शोधित तथापीय गाथा शेषेष्वप्यशेषु नातीव लक्षणसवादिनी दृश्यते तथा अन्या अपि गाथा न खल्वार्षीया सर्वा अपि लक्षणसवाद बिभ्रति तत्किमनया चर्चया ?, सत्यमेव मन्यते इह यत्र क्वचिदार्षे लक्षणविसवादो दृश्यते स सर्वोऽपि वर्तमानप्राकृतलक्षणग्रन्थापेक्षया एव द्रष्टव्य, चिरन्तनैस्तु लक्षणग्रन्थै सर्वोऽपि सवदत्येव, प्रकृतगाथाप्रथमाशकस्तु तैरपि सह न सवदतीति युक्त चर्चितमिति। 'वाहिराहड'त्ति (४५२–९–विवहाराहओ वृ०), वहिहिण्डको व्यसनोपहत इतियावत्। 'सो सभतो चिंतेती'त्यादि (४५३–२), ततश्चानेन सम्भ्रान्तेन चिन्तित–किमन्यान्येतानि पुष्पाणीति ?, सा च पृष्टा–कुतस्त्वया समानीतान्येतानि ?, तया कथित–त्वया निरूपितघटाद्, अतस्तेन स्वय गत्वा निरीक्षिते दृष्टो घट पुष्पगत च वृन्तपत्रादि किञ्चित् तत्रैव स्थितम्। 'अक्खपडिय'त्ति (४५३–७), गोलकाकर्षणक्रमेण कृतवारका। नमस्कारनिर्युक्ति समाप्ता।

दन्यतरव्यारयाङ्गमुच्यते, अत सैद्धान्तिकी मुद्रेय, यदुत–सर्वैरपि व्यारयातृभि व्याख्याचतुष्टयमभिधानीय, तत सूत्र-
स्पर्शिकनियुक्तिर्व्यारयेया, यत्तु पुनरपि निर्युक्तौ क्वचित्पदार्थाद्यभिधान तेन वृत्तिकारोक्तमेव स्पष्टीकरिष्यत इत्यदोष ।
'शलाकाशल्यकाङ्गरुहादी'ति ( ४५६–२४ ), तत्र शलाका–वशादिसम्बन्धिनी शल्यकाङ्गरुह–सहिका ( शिहिका )
शूलमुच्यते । आह–'इद नामकरणमेवे'त्यादि, नामकरणमेवेद, किं तद् ? इत्याह—'सञ्ज्ञाकरण'मिति ( ४५६–२५ )
यदिहोच्यते भवद्भि , कथमित्याह—पर्यायमात्रत –पर्यायमात्रमाश्रित्य, सञ्ज्ञाशब्दस्य नामपर्यायत्वात्, सञ्ज्ञाकरणमित्य-
नेन नामकरणमेवोक्त भवतीत्यर्थ । 'सञ्ज्ञाकरण त्वन्वर्थत' इति, क्रियतेऽनेनेति करण, योऽस्य करणशब्दस्य प्रतीय
मानोऽर्थस्तमाश्रित्य सञ्ज्ञाकरणमिह गृह्यते, कुत एतदित्याह—सञ्ज्ञाया करण सञ्ज्ञाकरण, द्रव्यस्य सञ्ज्ञया निर्दिश्यमान
त्वादिति, एतदुक्त भवति–यदि सञ्ज्ञा चासौ करण चेति कर्म्मधारयसमासाश्रयणात्सञ्ज्ञामात्रस्यैवाभिधान स्यात् तदा न
स्यादपि नामकरणादस्य भेद , तच्च नास्ति, यत सञ्ज्ञया करणमिति तृतीयातत्पुरुषाश्रयणात्सञ्ज्ञाकरणशब्देन द्रव्य पाइ
त्काद्यभिधीयते, तच्च करणशब्दाभिधेयार्थरूपतया द्रवणपरिणामस्वरूपमित्य वर्थो लभ्यत एवेति, अत स्थितमिद–नाम-
करणमपि यत्सान्वर्थ तत् सञ्ज्ञाकरणमिति परिभाषित, शेष त्वन्वर्थशून्य नामकरणमिति, भाष्यकारेणाप्येतदेवोक्त-
'सन्ना णामति मई'त्यादि ( ४५६–२६ ), सार्द्धगाथाव्याख्या–सञ्ज्ञाशब्देन नामैवोच्यते, ततश्च सञ्ज्ञाकरणस्य नामकर-
णान्न कश्चिद्भेद इति परस्य मति स्यादित्येव परमतमाशङ्क्योत्तरमाह—यद्भवताऽभिहित तन्न, सञ्ज्ञाकरणनामकरणयोर-
त्यन्तभेदात्, एतदेवाह—'नाम जमभिहाण'ति ( ४५७–१ ), यद्–यस्मात्कारणान्नाममिति–नामकरण–अभिधान

घट॑त एवेति यथाक्रम दर्शयति–जीवस्य निवासादि शरीर कायोऽभिधीयते, कुतो ?, जीवस्य निवासादिति, सर्वाण्यपि पञ्चम्यन्तपदान्येव योजनीयानि, एतदुक्त भवति–यदा जीवनिवासत्वेन कायो विवक्ष्यते तदाऽत्रापि निवासलक्षणोऽर्थो लभ्यते, तथा चितिशब्देनापि निचयोऽभिधीयते, ततश्चात्रापि यदा पुद्गलनिचयः कायशब्दस्याभिधेयतया विवक्ष्यते तदा चित्यर्थोऽपि लभ्यते, पुद्गलविशरारुतया च कायशब्दस्याभिधेयतया विवक्षिताया शरीरलक्षणोऽर्थ प्राप्यते, यदा च तेषामेव पुद्गलानामवयवेषु करचरणादिषु समाधान सङ्घातो मीलन कायशब्दाभिधेयतया चिन्त्यते तदाऽवयवसमाधान-लक्षणोऽर्थ प्राप्यते, चीयते पुद्गलैरवयवसमाधानद्वारेण निर्वर्त्यत इति काय इति भाव । 'जीवपद्धा जीवसम्प्रयुक्ता-श्चे'ति ( ४५६–३ ), तत्र वद्धा –शिथिलवन्धनपरिणत्या सङ्गृहीतमात्रा सप्रयुक्तास्तु त एव निविडवन्धनपरिणत्या आत्म-सात्कृता , अथवा वद्धा कायरूपतया परिणतिमात्रमानीता सप्रयुक्तास्तु कार्यनिर्वर्त्यधावनवल्गनादिक्रियाया व्यापारिता उच्यन्ते इति । 'अक्खलियसहियाईवक्खाणचउक्कए दरिसियमी'त्यादि ( ४५६–१० ), ननु यद्यस्खलितसहितादि-व्याख्याचतुष्टये दर्शिते सति सूत्रस्पर्शकनिर्युक्तेरवसरस्तर्हि तस्या चालनाप्रत्यवस्थाने एव वक्तव्ये प्राप्नुत , शेषव्याख्याङ्ग-या कि करिष्यति ?, तत्सर्वमतिरिच्यते, अथ तस्यामुच्यते तत्सर्व तर्हि वृत्तिकृता यत्तस्य स्वरूपमाविष्कृत तत्कथ न निष्फलमिति, सत्यमेतत्, किन्तु यद्यप्यस्या सूत्रस्पर्शिकनिर्युक्तौ प्राय सर्वाण्यपि व्याख्याङ्गानि दर्शयिष्यति तथापि नाय सर्वत्र नियमो, यत स्थानान्तरे सूत्रस्पर्शनिर्युक्तिषु कचिच्चालनाप्रत्यवस्थाने एवाभिधीयेते, कचित्तु पदार्थमात्रमेव किञ्चि-

त्वात् न ह्यौदारिकवत् तयो सर्वथा परित्यक्तयो पुनर्भवान्तरसभवोऽस्ति येनाद्यपुद्गलग्रहणलक्षण सघातकरण स्यात्, सत्यमेतत्, किन्तु प्रवाहापेक्षया तयोरनादित्व, इद चोक्त व्यक्त्यपेक्षया, तथा च सति यन्मनुष्यादिभवे समुत्पन्नमात्रस्त योग्यपुद्गलग्रहण करोति तत् तद्भवापेक्षयाऽऽद्य तैजसकार्म्मणयो पुद्गलसघातकरणमुच्यते, न तु पूर्वभवसम्बन्धिशरीर सर्वथा परित्यज्योत्तरभवशरीर गृह्णतो य एकसामयिकपुद्गलग्रहणलक्षण सिद्धान्तपरिभाषित सघात स इह गृह्यते किन्त्वाद्यपुद्गलग्रहणमात्र, तच्च विवक्षितभवापेक्षया तयोरपि विद्यत इत्यदोष । 'अथवेदमन्यादृक् त्रिविध करणमि'-ति ( ४५८-२१ ), एतदुक्त भवति—"जीवप्पओगकरण दुविह मूलप्पओगकरण चे' त्यादिना तावदेकया भङ्ग्या दर्शित जीवप्रयोगकरण, इदानीं तदेव प्रकारान्तरेण प्रदर्श्यत इति । 'इह च सर्वजघन्यमायुष्क क्षुल्लकभवग्रहण'मित्यादि ( ४५९-७ ) अत्र यदानापानकालस्य सप्तदशभाग इत्यभिहित तत् स्थूलन्यायमाश्रित्य, सूक्ष्मेक्षिकया तु किञ्चिन्न्यूनोऽसौ द्रष्टव्यो, यत एतस्यायमानयनोपाय –इह किलैकस्मिन् मुहूर्त्ते पञ्चषष्टिसहस्राणि पञ्चशतानि षट्त्रिंशदधिकानि क्षुल्लक भवग्रहणाना भवन्तीति वृद्धसम्प्रदाय, तदुक्त—"पण्णट्ठिसहस्साइ पचेव सया हवति छत्तीसा । खुड्डागभवग्गहणा एगमुहुत्तमि एवइया ॥ १ ॥" आनापानाश्चैकस्मिन्मुहूर्त्ते त्रीणि सहस्राणि सप्तशतानि त्रिसप्तत्यधिकानि भवन्ति, यदाह—तिन्नि सहस्सा सत्त य सयाणि तेवत्तरि च ऊसासा । एस मुहुत्तो भणिओ सव्वेहिं अणतनाणीहि ॥ १ ॥ ततश्चानेनानापानराशिनाऽनन्तरोपदर्शितक्षुल्लकभवग्रहणराशेर्भागोऽपहियते, तद्यथा—$\frac{६५५३६}{३७७३}$ लब्ध [१७] उद्धरितस्त्वय राशि $\frac{१३९५}{३७७३}$ अत्र च यदि कश्चित्सूक्ष्मेक्षिकतया ज्ञातुमिच्छति तदा त्रयोदशशतानि पञ्चनवत्यधिकानि पुनरपि शतद्वयेन षट्पञ्चाशद-

मात्रमेवोच्यते, अर्थानपेक्षककाररेफणकारस्वरूपवर्णत्रयनिष्पन्नवर्णावलीमात्रमेवाभिधीयत इत्यर्थ, यद्वा तदर्थरिक्ते—कर
णशब्दाभिधेयार्थविकले जीवादौ करणमिति नाम क्रियत तन्नामकरणमुच्यते, एतस्माच्च द्विभेदादपि नामकरणात् सज्ञा
करण भिद्यत इति दर्शयति—द्रव्य पुनर्यत्सज्ञाकरणशब्देनाभिधित्सता पेलुकरणादि रूतपूणिकाव ( दिन ) लनकादीत्यर्थ,
तद् द्रवणपरिणाम करणशब्दाभिधेयार्थरूपतया परिणतिस्वभावमित्यर्थ अतो न तद् द्रव्य पेलुकरणादिक तदर्थशून्य—करण
शब्दार्थशून्य न वा शब्दोऽर्थानपेक्षवर्णावलीमात्रलक्षण, एव च नामकरणभेदद्वयादपि सज्ञाकरणस्य भेदो दर्शितो भवतीति
गाथार्थ, आह—ननु यदि तद्रव्य पेलुकरणादि करणशब्दार्थशून्य न भवति किन्तु सान्वर्थ तर्हि भावकरणमेव तत् किमिति
द्रव्यकरणाधिकारे पठ्यत इत्येतदेवाह—'जइ न तयत्थविहीण'मित्यादिगाथा ( ४५७–२ ) व्याख्या—यदि तदर्थवि
हीन—करणशब्दार्थविहीन न भवति द्रव्य पाइलकादीतिशेष 'तो'त्ति तत किं—कस्माद्धेतो द्रव्यकरण तत् न तु भावकर
णमिति ?, एव च परेण साक्षेप पृष्टे सत्याहाचार्य—'जतो'त्ति यद्—यस्मात्कारणात् तेन पाइलकादिना करणैर द्रव्य—
कटादिक क्रियते तस्मात्तद्रव्यकरणमुच्यते, एतदुक्त भवति—द्रव्यस्य करण द्रव्यकरणमित्येव व्युत्पत्त्यर्थमाश्रित्य द्रव्यप्रा-
धान्यविवक्षया तद्रव्यकरणमुक्तमिति, ननु द्रव्य क्रियतेऽनेनेति द्रव्यकरण तदस्तु, सज्ञाकरण तु कया विवक्षयोच्यत
इत्याह—संज्ञाकरणमिति च करणरूढित इति, एतदुक्त भवति—तेषा हि पेलुकरणादीना करणमिति सज्ञा क्वचिद्देशे रूढा,
अतस्ता रूढिमाश्रित्य सज्ञाविशिष्ट करण सज्ञाकरणमित्युच्यत इति गाथार्थ ॥ 'पञ्चानामौदारिकादिशरीराणामाद्य
सङ्घातकरण'मित्यादि ( ४५८–११ ), ननु चात्र यदुक्तमाद्य सङ्घातकरणमिति तत् तैजसकार्म्मणयोर्न घटते अनादि

यदि परभवप्रथमसमये प्राक्तनशरीरपुद्गलाना सर्वपरिशाटोऽभ्युपगम्यते हन्त तर्हि यदा कश्चिज्जीवो निर्विग्रहतो–विग्रह मकृत्वा ऋजुश्रेण्यैवोत्पद्यते तदा तस्मिन्नेव समये अग्रेतनशरीरपुद्गलाना सर्वसङ्घातोऽप्यभ्युपगन्तव्य एव, भवत्वेव को दोष इति चेद् अत्राह–ननु सर्वपरिशाट सर्वसघातश्चेत्येतद्द्वय समय इत्येकस्मिन्नेव समयेऽभ्युपगम्यमान विरुध्यते, युग पदायुर्द्वयानुभवप्रसङ्गात्, नचैतत्सिद्धान्तेऽभ्युपगम्यत इति गाथार्थ । अत्राचार्यो निश्चयनयमतेनैवोत्तरमाह—'जम्हा विगच्छमाण'मित्यादि ( ४५९–१७ ), यस्माद् विगच्छद्विगत उत्पद्यमान चोत्पन्न तस्मात् परभवाद्यसमये सर्वमोक्षस-र्वादानयोर्न कश्चिद्विरोध , एतदुक्त भवति–निश्चनयमते प्राग्भवायु पुद्गला अपनीयमाना अपगता एव द्रष्टव्या , तत्कथ मागामिभवायु पुद्गलैरत्पन्नै सहैकस्मिन् समये तेपामनुभूयमानता समस्ति येन विरोध स्यादिति गाथार्थ । आचार्य एवा भ्युच्चयदूपणमाह—'चुतिसमये'त्यादि ( ४५९–१८ ), व्याख्या–च्युतिसमये इहभवायु पुद्गलसर्वपरिशाटसमये तावदि-हभवो न भवत्यय, कुत ?–इहभवसम्बन्धिदेहविमोक्षात् सर्वपरित्यागेन परित्यक्तत्वाद्, यथाऽतीतजन्मनीहभवो नास्त्य त्रत्यदेहाभावात् तथा च्युतिसमयेऽप्यसौ न भवत्येव, इहभवदेहाभावस्याविशेषाद्, एव च सति यदि तस्मिंश्च्युतिसमये परभवोऽपि भवता नाभ्युपगम्यते तदाऽसौ ससारी जीव को भवतु ?, इहभवत्वस्य तावच्चुक्तित एव निपेधात् परभवत्वस्य तु त्वयाऽप्यनभ्युपगम्यमानत्वात् निर्व्यपदेश्य एवासौ स्यादिति गाथार्थ ॥ अत्राह पर —'णणु जइ विग्गहकाले'इ-त्यादि ( ४५९–१९ ), नन्विति आक्षेपे, ननु यथा विग्रहकाले–वक्रेण परभवगमनकाले पारभविकदेहाभावेऽपि परभव-सम्बन्धी जीवो व्यपदिश्यते तथा–तेनैव प्रकारेणेहभवसम्बन्धिनो देहस्याभावेऽपि भवेदिहभवोऽपि न कश्चिद्दोष , एतदुक्त

धिकेन गुण्यन्त, यत एतावत्य आवलिका एकस्मिन् क्षुल्लकभवग्रहणे भवन्तीति वृद्धा, "तथा चाह् —"दो य सया छप्पना आवलिआण तु खुड्डभवमाण। जियरागदोसमोहेहि जिणवरेहिं विणिद्दिट्ठ ॥ १ ॥" ततश्चाय राशिर्भवति— १२३१२० / ३७७३, लब्धाश्चतुर्णवतिरावलिका सातिरेका, एतावताऽभ्यधिकानि सप्तदशक्षुल्लकभवग्रहणान्येकस्मिन्नानापानकाल भवन्ति। 'उक्कोसो समऊणो' इत्यादि (४५९–१४) गाथाव्याख्या—उत्कृष्ट औदारिकस्य सङ्घातपरिशाटकाल पल्योपमत्रयलक्षण समयेन हीनो य उक्त इति शेष 'उक्कोसग तु पलियत्तिय तु समऊण' मित्यनेन ग्रन्थेन, स किमित्याह–स सघातनासमयेन हीनो मन्तव्यो, देवकुर्वादिषु भवान्तरादायातस्य य प्रथम सघातसमयस्तस्मिन्नपनीते शेष समयोनपल्योपमत्रयलक्षण कालोऽयमवाप्यत इत्यर्थ। ननु यथा पल्योपमत्रयात्सर्वसघातसमयोऽपनीयते तथा चरमसमयभावी सर्वपरिशाटसमयोऽप्यपनेय एव अतो द्विसमयहीन कालोऽय प्राप्नोतीति, एतदेवाह पर —'किह न दुसमये'त्यादि (४५९–१५), कथ–केन प्रकारेण न द्विसमयहीनोऽसौ पल्योपमत्रयलक्षण कालो भवति, क्व सति ?—सङ्घातसमयवत्परिशाटकसमयेऽपनीते सतीति गाथार्थ। अत्राचार्यो निश्चयमतमालम्ब्योत्तरमाह—'भन्नती'त्यादि, भण्यते अत्र प्रत्युत्तर, कितद् इत्याह–भवस्य मनुष्यादिसम्बन्धिनो योऽसौ चरमसमयस्तस्मिन्नपि सघातपरिशाटौ समुदितावेव प्रवर्त्तेते, यस्तु केवल परिशाट स परभवसमय एव अतो न तेन हीन काल पल्योपमत्रयलक्षण, निश्चयनयो हि निर्जीर्यमाण निर्जीर्णमिच्छत्यतो यस्मिन् समये समस्तायुर्दलिकनिर्जीर्यमाणतालक्षण सर्वपरिशाट स परभवायुष एव प्रथमसमय इति न प्राक्तनायुषो मध्यादपनेय इति गाथाभावार्थ। एवमभ्युपगमेऽन्यदोष पश्यन् पुनरपि पर: प्रेरयति—'जइ परपढमे इत्यादि (४५९–१६),

द्वौ विग्रहसमयावेकश्च संघातनासमय सर्वेऽपि त्रय , अयमत्र भावार्थो–जघन्यान्तरकालस्य प्रस्तुतत्वात्प्राग्भवात् कृत विग्रहोत्पन्नस्य जन्तोरिह ग्रहण, अन्यथा हि मध्यम काल स्यात्, ततश्च कश्चिज्जीव क्वचित्पूर्वभवेऽसत्कल्पनया विंशति-समयप्रमाणक्षुल्लकभवग्रहणस्वरूपमायुर्बद्धा यदा समयद्वयविग्रहेण वनस्पतिषु उत्पद्यते तृतीयसमये च संघात करोति तत शेषसप्तदशसमयान् जीवित्वाऽन्यत्र क्वचिदविग्रहेणोत्पद्य संघात करोति तदा त एव सप्तदश समया संघातद्वयान्तर भवतीति गाथाद्वयार्थ । इदानीमुत्कृष्टसंघातान्तर भावयति–'उक्कोस तित्तीस' गाहा ( ४६०–८ ), 'काऊण पुव्व-कोडिं' गाहा ( ४६०–९ ), व्याख्या–सागरोपमाणीत्यस्य व्यवहित सम्बन्ध , ततश्च त्रयस्त्रिंशत्सागरोपमाणि समयाधिक-पूर्वकोट्यभ्यधिकान्यौदारिकसंघातान्तरमुत्कृष्ट भवतीति गम्यते, कदा पुनरय संघातान्तरकालो लभ्यत इत्याह–स –उक्त-लक्षण काल इह तृतीयसमये संघातयत –सर्व संघात कुर्वतो लभ्यत इति द्वितीयगाथाया सटङ्क , किंकृत्वा ? इत्याह–कुतश्चि-त्पूर्वभवादविग्रहेण इह तावन्मनुष्यभवे समागत्य प्रथमसमये संघात कृत्वा पूर्वकोटि विधृत्य–पूर्वकोटिप्रमाणमिहायुष्क परिपाल्य ततश्च ज्येष्ठमायुष्क त्रयस्त्रिंशत्सागरोपमलक्षण सुरेष्वनुत्तरविमानेषु भुक्त्वा च्युत समयद्वय विग्रहे विधाय तृतीयसमये संघात विधत्ते, एव च सति समयोना पूर्वकोटि प्रथमा त्रयस्त्रिंशत्सागरोपमाणि देवभवसम्बन्धीनि पुनरपीहागतस्य विग्रहसत्कसमयद्वय च संघातद्वयस्यान्तर भवति, अत्र च विग्रहसत्कसमयद्वयमध्यादेक प्राक्तनपूर्वकोट्या प्रक्षिप्यते, अत त्रयस्त्रिंशत्सागरोप-माणि समयाधिकपूर्वकोट्यधिकानि संघातान्तर भवतीति गाथाद्वयार्थ । 'इद पुन' सर्वसाटान्तर सर्व ( जघन्य ) क्षुल्लकभवमान, कथम् ?, इहानन्तरातीतभवचरमसमये' इत्यादि ( ४६०–१० ) अत्राह–ननु कश्चिदौदारिकशरीरी

भवति-यथा वक्रगतौ परभवशरीराभावेऽपि परभवत्वेन व्यपदेश तथेहभवशरीराभावेऽपि च्युतिसमये इहभवत्वेन व्यपदेशोऽभ्युपगन्तव्य एव, न्यायस्य समानत्वादिति गाथार्थ । आचार्य आह—नन्वेतद् ब्रुवता त्वया असत्साहाय्यमेवानुष्ठित स्याद्, यतो यथा विग्रहकाले पारभविकशरीराभावेऽपि परभवव्यपदेश तथा च्युतिसमयेऽपीहभवशरीरत्यागे सति परभवशरीराभावस्य तुल्यत्वाद्विग्रहकालवदेव परभवव्यपदेश कि नाभ्युपगम्यत इति ?, एतदेवाह—'ज मिव विग्गह काले'इत्यादि (४५९-२०) यत एव कारणाद्विग्रहकाले देहाभावेऽपि-परभवशरीराभावेऽपि [तत ] परभवोऽसौ भवतोऽपि सम्मत तत एव तर्हि च्युतिसमयेऽपीहभवसम्बन्धी परभवसम्बन्धी वा नास्ति देहोऽतो देहाभावस्य तुल्यत्वाद्विग्रहकालवत् च्युतिसमयेऽपि कस्मात् परभवव्यपदेशो नाभ्युपेयते, 'न विग्गहो जइ त्ति यदि पुनरेव ब्रूयात्परो यदुत-असौ च्युतिसमयो न विग्रह परभवव्यपदेशस्तु विग्रहकाल एव मयाऽभ्युपगम्यते, तत्रोच्यते—'स कओ होउ'त्ति यदि च्युतिसमयो विग्रहो न भवतीति नास्य परभवत्व प्रतिपद्यते हन्त तर्हि ससारी जीवस्तदा को भवतु ?, इहभववपुषस्त्यक्तत्वात्परभवस्य च त्वयाऽप्यनभ्युपगम्यमानत्वात् तथैव-निर्व्यपदेश्य एव स्यादिति गाथार्थ । जघन्यसघातान्तरभावनामाह—'सघायतरकालो' गाहा 'तेहूण' गाहा (४६०-७), व्याख्या—एकदा सघात कृत्वा पुन शरीरान्तरे सङ्घात कुर्वतो योऽसौ जघ योऽन्तरकाल स त्रिसमयहीन क्षुल्लकभवमानोऽवसेय , स च कदा लभ्यत इत्याह—परभवमविग्रहेण गत्वा प्रथमसमये सघातयत -सर्वसघात कुर्वतो जीवस्य लभ्यत इति द्वितीयगाथाया सम्बन्धः, कि कृत्वा यत् परभवगमनमित्याह—क्षुल्लकभवग्रहणलक्षणमायुर्विधृत्य, कथम्भूत ?-न्यून, कै ?-तैस्त्रिभि समयैरिति गम्यते, ये किमित्याह—

द्वन्द्व त्रयश्च समया इति गम्यते समयश्च त्रिसमयास्तैर्हीनं, एव तु सति सर्वबन्धस्य त्रिभि सर्वशाटस्य च समयेन हीन क्षुल्लकमित्युक्त भवति, इद च सर्व भाष्यकारेण सह विरुध्यते, यत स आह—"खुड्डागभवग्गहण जहन्नमुक्कोसय च तेत्तीस । त सागरोवमाइ सपुन्ना पुव्वकोडी उ ॥ १ ॥" अत्र चोत्तराध्ययनबृहट्टीकादिषु भाष्यकृद्वचनसमर्थक समाधान दृश्यते, तच्चेद–अनन्तरातीतभवचरमसमय एव कश्चिदौदारिकशरीरी सर्वपरिशाट कृत्वा वनस्पतिषूत्पद्यते, न पुनर्वनस्पत्यायुष प्रथमसमये सर्वपरिशाट करोति, व्यवहारमताश्रयणात्, "परभवपढमे साडण"मित्यस्य च निश्चयमताश्रयणात्, ततश्च यदा वनस्पतिषूत्पन्न परिपूर्णक्षुल्लकभवग्रहणमतिवाह्यान्यत्रोत्पद्यते तदा परभवप्रथमसमये सर्वशाट करोति, अत्र निश्चयमताश्रयणाद्व्यवहारनयमतस्य चानाश्रयणाद्, एव च सत्यादौ व्यवहारनये पर्यन्ते च निश्चयनये समाश्रियमाणे सम्पूर्ण क्षुल्लकभवग्रहण शाटद्वयस्यान्तरमवाप्यत इत्येव न भाष्यकृद्वचो विरुध्यते, तथोत्कृष्टान्तरपक्षेऽपि यदा कश्चित् सयतमनुष्यस्तद्भवस्यैव चरमसमये उक्तन्यायेन सर्वपरिशाट करोति न परभवस्य प्रथमसमये तदानुत्तरेषु परिपूर्णानि त्रयस्त्रिंशत्सागरोपमाणि, पुनरपि च मनुष्येष्वागत पूर्वकोटिं चातिवाह्यान्यत्रोत्पद्यमानो निश्चयनयमतेन परभवप्रथमे शाट करोति तदा त्रयस्त्रिंशत्सागरोपमाणि सम्पूर्णा च पूर्वकोटि शाटद्वयस्योत्कृष्टमन्तरमवाप्यत इत्येवमुत्कृष्टपक्षेऽपि भाष्यकारवचनमविरोधेन गमित भवति, अत्राप्यादौ व्यवहारस्यान्ते च निश्चयस्याश्रयणादिति सर्व सुस्थमिति । एव तावदेकैकमधिकृत्य पृथक् सघातस्य परिशाटस्य चान्तरमुक्त, इदानीं युगपदुभयस्यान्तरकालभावनामाह—'उभयतर' गाहा 'अणुभविउं' गाहा ( ४६०—२१ ) व्याख्या–उभय–संघातपरिशाटलक्षण तस्य जघन्यत समयप्रमाणोऽन्तरकालो विज्ञेय,

सर्वसाट कृत्वा वनस्पतिष्वागत्येत्यादिभावना नातीव घटामियर्त्ति, यत 'परभवपढमे साटो' इति न्यायाद् वनस्पत्या युष एव मध्यात् साटसमयस्यापगमो युक्त , तन्मध्याच्च तस्मिन्नपनीते समयहीन क्षुल्लकभवग्रहण जघन्य शाटान्तर प्राप्नोति, तथोत्कृष्टसाटान्तरभावनायामपि यदुच्यते कश्चित्सयतमनुष्य औदारिकसर्वसाट कृत्वा इत्यादि, तदपि न युक्तिमद्गत, यतस्तत्राप्युक्तन्यायेन देवभवायुष एव मध्यात्साटसमय पतितुमर्हत्ति, एव च सति समयोनपूर्वकोट्यधिकानि त्रयस्त्रिंश-त्सागरोपमाण्युत्कृष्ट शाटान्तर स्यादिति, अत्रोच्यते, अत्र जघन्यशाटान्तरपक्षे वृत्तिकारो भवदभिप्रेतमेव समयोनक्षुल्लक भवग्रहणमान शाटान्तर गुरवस्तु व्याचक्षत इत्यादिनाऽभ्युपगमयिष्यति, केवलमुत्कृष्टशाटान्तरपक्षे वृत्तिकृताऽपि न किञ्चिदुक्त पर, किन्तु जघन्यशाटान्तरानुसारत एवोत्कृष्टपक्षेऽपि भवदुक्तमेव शाटान्तर वृत्तिकारस्याप्यभिमतमिति लक्ष्यते, यस्त्विह कश्चित् सयतमनुष्य औदारिकसर्वशाट कृत्वेत्यादिनोत्कृष्टशाटान्तरभावना कुर्वता परिपूर्णपूर्वकोट्यधि कानि त्रयस्त्रिंशत्सागरोपमाणि वृत्तिकारेणोक्तानि न पुन समयहीनपूर्वकोट्यधिकानि तत् किल 'खुड्डागभवग्गहण जहन्न-मुक्कोसय तु तेत्तीस मित्यादिभाष्यगाथामनुवर्त्तमानेनोक्त, ननु यदि समयहीन क्षुल्लकभवग्रहण सर्वशाटान्तर वृत्तिकृतो ऽप्यभिप्रेत तर्हि गाथाया यदुक्त "तिसमयहीण खुड्ड"मित्यादि तत्कथमुपपन्न स्याद् ?, इद हि गाथाशकलमनन्तरमेव वृत्ति-कारेण स्वयमेवेत्थ विवृत, तत्र त्रिसमयहीन सर्वबन्धस्य क्षुल्ल तु सम्पूर्ण सर्वशाटस्येति, उत्कृष्टशाटान्तरपक्षे तु न किञ्चि-द् ब्रूम , तस्य गाथायामनुक्तस्यैव वृत्तिकृता भाष्यगाथानुवृत्त्या भावितत्वादिति, अत्राह-स्वयमेव वृत्तिकार 'तथा च किलैवमक्षराणि नीयन्त इत्यादि ( ४६०-१६ ), एतदुक्त भवति-नात्र कर्मधारय क्रियते त्रयश्च ते समयाश्चेति किन्तु

इत्याह–"समये"त्यादि जघन्यान्तरकालस्तृतीयसमये दिवि सघातयतो विज्ञेय , कस्य ?–समयमेक विकुर्व्य मृतस्य, यो ह्यौदारिकशरीरी समयमेक वैक्रियसघात कृत्वा मृत सन् समयमेकं विग्रह च विधाय तृतीयसमये दिव गत्वा सघातयति तत्सम्बन्धिन सङ्घातद्वयस्य विग्रहसमयोऽन्तरे प्राप्यत इति भावना, अथवेदमेवान्तर प्रकारान्तरेणाह–तृतीये वा समये मृतस्य तृतीयसमये सङ्घातयत इति सम्बध्यते, एतदुक्तं भवति–य कश्चिदिहौदारिकशरीरी वैक्रियलब्धिमान् वैक्रियशरीरमारभ्य प्रथमसमये सङ्घात विधत्ते द्वितीयसमये च सङ्घातपरिशाटौ तृतीयसमये म्रियते तस्मिन्नेव च तृतीयसमये निर्विग्रहेण सुरलोकमवाप्य वैक्रियसङ्घात करोति तस्य जन्तोः सम्बन्धिन सङ्घातद्वयस्यान्तरे सङ्घातपरिशाटसमय प्राप्यत इति गाथार्थ । "ततिए व मयस्स ततियमि"त्ति एतद्गाथादल किञ्चिद्दुरवबोधमिति सम्प्रधार्य भावनामात्रमाह वृत्तिकार –अविग्रहेण सङ्घातयत इत्यादि भावितमेवेति, साम्प्रतमुभयस्य परिशाटस्य चान्तरकालभावनामाह–'उभयस्सेत्यादि' गाथा ( ४६१–१७ ), व्याख्या–उभयस्य–वैक्रियसम्बन्धिन सघाटपरिशाटलक्षणस्य समय एको जघन्यमन्तरमित्यध्याहारः, कस्य जन्तोरिदमवाप्यते ? इत्याह–चिरमन्तर्मुहूर्त्तमान काल विकुर्व्य वैक्रियवपुषि स्थित्वा मृतस्य देवेष्वविग्रहग तस्य जन्तो सङ्घातसमयोऽन्तरे प्राप्यते, अयमत्र भावार्थ –य औदारिकशरीरी वैक्रियलब्धिमानारचितवैक्रियशरीर परिपूर्ण मनुष्यवैक्रियशरीरस्थितिकाल यावत्सङ्घातपरिसाटौ विधाय म्रियतेऽविग्रहेण च सुरालये समुत्पद्य प्रथमसमये वैक्रियसङ्घात करोति द्वितीयादिसमयेषु तु सघातपरिशाटौ तत्सम्बन्धिन उभयस्य चान्तरे स एवानन्तरोक्त सघातसमयो भवतीति, ननु यद्येव "चिरवेउव्वियमयस्से"त्यत्र चिरग्रहणमपार्थकम्, इह हि मनुष्यादिषु यश्चिर स्तोक वा काल वैक्रिय-

कदाऽसौ लभ्यत इत्याह—"निविग्गहसघाए"त्ति इयमत्र भावना—अविग्रहेण कश्चिदौदारिकशरीरी मृतोऽन्यत्र ऋजुश्रेण्या समुत्पद्य प्रथमसमये सघात कृत्वा यदा द्वितीयसमये सघातपरिशाटलक्षणमुभय करोति तदा सघातसमय एवैक उभया-न्तरे भवतीति, उत्कृष्टमुभयान्तरमाह—परम—प्रकृष्ट उभयान्तरमिति सम्बध्यते, सह त्रिभि समयैर्वर्त्तत इति सत्रिसमयानि त्रयस्त्रिंशत्सागरोपमाणि भवन्ति, कदा पुनरमूनि लभ्यन्ते ? इत्याह—देवादिष्वादिशब्दादप्रतिष्ठाने त्रयस्त्रिंशत्सागरोप माणि अनुभूयेहागतस्य तृतीयसमये सघातयतो ज्ञेयानि समयकुशलै, अयमत्र भावार्थ—इह कश्चिन्मनुष्यादि स्वभवचर-मसमये सघातपरिशाटौ समुदितौ कृत्वा अनुत्तरसुरेष्वप्रतिष्ठाने वा यदा त्रयस्त्रिंशत्सागरोपमाण्यनुभूय पुनरपीह विग्रहे-णोत्पन्नस्तृतीयसमये सघात कृत्वा तत उभयमारभते तदा द्वौ विग्रहसमयावेकश्च सघातसमयो देवादिभवसम्बन्धीनि च त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टोभयान्तरे प्राप्यन्त इति गाथाद्वयार्थ । औदारिकसङ्घातादिवक्तव्यता समाप्ता ॥

वैक्रियोभयस्य भावनामाह—'उभय जहन्नसमओ' गाहा ( ४६१–१० ), उभय—सघातपरिशाटलक्षण जघन्य वैक्रि-यशरीरस्य समयप्रमाण भवति, कस्य तद्भवतीत्याह—समयद्वय विकुर्व्य मृतस्य, यो हि किलौदारिकशरीरी वैक्रियमारभ्य प्रथमसमये सर्वसघात द्वितीयसमये तु सघातपरिशाटौ विधाय म्रियते तस्यैकसामयिक वैक्रियस्य सघातपरिशाटलक्षणमु-भयमवाप्यते, उत्कृष्ट वैक्रियोभयकालमाह—पर—उत्कृष्ट वैक्रियस्योभय सघातसमयहीनानि त्रयस्त्रिंशत्सागरोपमाण्यनुत्तर-देवस्याप्रतिष्ठाननारकस्य वा भवतीति गाथार्थः । वैक्रियस्यैव सङ्घाताद्यन्तरभावनामाह—'सघायतरसमओ' गाहा ( ४६१–१५ ), व्याख्या—एकदा वैक्रियसघात कृत्वा पुनरपि वैक्रियसघात कुर्वतो जघन्यमन्तर समयो भवति, कथ ?

'दित्यादि ( ४६२–२६ ), व्यज्यते–घटाकाश पटाकाशमित्या-
त्रेण भेद । 'तदिह "यञ्जनशब्देन क्षेत्राभिव्यञ्जकत्वा'दित्यादि ( ४६२–२६ ), व्यज्यते–घटाकाश पटाकाशमित्या- 'तत्सम्बन्धा'दिति
दिव्यपदेशैर्विशेषणद्वारेण प्रकटीक्रियते क्षेत्रममीभिरिति व्यञ्जन पुद्गला घटपटशकटलकुटादय 'तत्सम्बन्धा'दिति
व्यञ्जनसम्बन्धात् पर्यायमापन्न व्यञ्जनपर्यायापन्न, एतदुक्त भवति–यदेकस्मिन्नभोदेशे व्यवस्थितो रक्तो घट प्रयोगान्तरेण
शुक्लीक्रियते तदा पूर्व तन्नभो रक्तघटसम्बद्धमासीत् पश्चात्तदेव शुक्लघटसम्बद्धमभूद्, एव च सति स शुक्लगुणलक्षण पर्यायो
वस्तुवृत्त्या तस्यैव नभस उत्पन्न , एवमन्यस्यापि पुद्गलराशेर्य प्रतिक्षण पर्यायसमूह समुत्पद्यते तमापन्न नभो यदा विव-
क्ष्यते तदा नभसोऽप्यस्ति करण, तथापि पर्यायस्यैव करणं न व्योम्न इति चेदित्याह—'पर्यायो द्रव्यादनन्य'इति
( ४६२–२७ ), तस्मिन्कृते द्रव्यमपि कृतमेव भवति, यदिवा किमनेन कष्टोत्तरेण, लौकिकादेवोपचारात्सिध्यति क्षेत्रस्य
करण, सम्भवन्ति ह्येव वक्तारो लोका –इक्षुक्षेत्र शालिक्षेत्र वा मया कृतमिति, एतद्दर्शयति—'उपचारमात्राद्वे'त्यादि
( ४६३–१ )। अथ यदा वर्त्तनास्वरूप कालो विवक्ष्यते तदा वर्त्तनादीना स्वयमेव भावान्मा भूत् कालस्य करण यदा
त्वर्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्ती समयादिरूप कालो विवक्ष्यते तदा तस्य परकृतत्वात्करणत्व भविष्यतीत्याह—'समया-
द्यपेक्षाया चापरोपादानत्वा'दिति ( ४६३–५ ), न हि समयादिरूपस्यापि कालस्योपादानभूत –कारणभूत कश्चनापि
परो विद्यते, तदा तस्य परकृतत्वात्करणत्व भविष्यतीत्याह—तस्यापि स्वरससिद्धत्वात्कुत करणतेतिभावार्थ । 'बव च
बालव चे'त्यादि ( ४६३–१० ), इयमत्र भावना–कृष्णचतुर्दशीरात्रौ शकुनिर्नामावस्थित करण भवति, अमावास्याया-
महि चतुष्पद रात्रौ नाग शुक्लपक्षप्रतिपदि दिवा किंस्तुघ्न, एतानि चत्वार्यप्यवस्थितानि करणान्युच्यन्ते, एतास्वेव तिथिषु

सङ्घातपरिशाटौ कृत्वाऽविग्रहेण दिवि समुत्पद्यते तेनैव प्रयोजन, किं चिरशब्दविशेषणेन ?, सत्य, किन्तु प्रथमसमयेऽपि मरणनिषेधार्थमित्थमुक्त, यदिवाऽनन्तर वैक्रियसङ्घातान्तर भावयता सप्रयोजनत्वाद् द्वितीयादिसमयेष्वाकस्मिकमसमास-वैक्रियस्यापि मरणमुक्त अत्र त्वसमासवैक्रियस्यापि मरणनिदर्शने न किञ्चित्प्रयोजनमिति ख्यापनार्थं चिरग्रहणेन परिपूर्णान्तर्मौहूर्त्तिकमनुष्यादिवैक्रियस्थितिकालानुज्ञामपि कृतवानाचार्य इत्यदोष । 'साऽऽस्सतोमुहुत्तो' त्ति, एकदा वैक्रिय सर्वशाट कृत्वा पुनरपि तत्सर्वशाट कुर्वतोऽन्तर्मुहूर्त्त जघन्यमन्तर भवति, कथमिति चेद् ? उच्यते–कश्चिदौदारिकशरीरी वैक्रियलब्धिमान् कस्मिंश्चित्प्रयोजने वैक्रियशरीरमारभ्यान्तर्मुहूर्त्त तथैवावस्थिति विधाय चरमसमये तत्सर्वशाट कृत्वा पुनरप्यौदारिकमाश्रयति, ततस्तत्रान्तर्मुहूर्त्त स्थित्वा पुनरप्युत्पन्ने प्रयोजने वैक्रिय निर्वर्त्तयत्यन्तर्मुहूर्त्त च तत्र स्थिति कृत्वा पुनरप्यौदारिकमागच्छँश्चरमसमये वैक्रियसर्वपरिशाट करोति, एव सति शाटद्वयस्यान्तरे समयोनमन्तर्मुहूर्त्तद्वय भवति, तेन च द्वयेनापि लघुत्वादेकमेव पुष्टतरमन्तर्मुहूर्त्त निष्पद्यते अतो युज्यते जघन्यशाटान्तरमन्तर्मुहूर्त्तमिति, सङ्घातादित्रयस्या-प्युत्कृष्टमन्तरमाह–'तिण्हवि तरुकालमुक्कोस'त्ति, यदा कश्चिज्जीवो वैक्रियशरीरस्य सङ्घातादित्रय कृत्वा वनस्पतिषूत्पन्न तत्र चानन्तकालमतिवाह्य तत उद्धृत्त पुनरपि क्वचिद्वैक्रियशरीरमासाद्य तत्सघातादित्रय करोति तदा तत्सम्बन्धिन सघातपरिशाटोभयलक्षणस्य त्रयस्याप्यन्तरे स एव वनस्पतिकालो भवतीतिगाथार्थ । 'ततश्चात्र व्युत्पत्तिभेदमात्रमा श्रीयत' इति ( ४६२–२० ), एतदुक्त भवति–पूर्व हि "जीवमजीवे पाओगिय त्वि"त्यादि ब्रुवता अजीवे–कुसुम्भादौ करणमजीवकरणमिति सप्तमीतत्पुरुष सूचित , इह तु जीवप्रयोगात्करण जीवप्रयोगकरणमिति पञ्चमीतत्पुरुष इत्येतावन्मा-

श्रुतमन्तर्जल्पाकार श्रुतोपयोगरूप, शब्दकरण तु ना । करेमि भते ! सामाइय सव सावज्ज जोगमित्यादिसामायिकशब्दोच्चारण निरुपयोगस्य सम्बन्धि गृह्यते, कि तर्हि गृह्यते ? इति चेदित्याह—'तच्छब्दविशिष्ट श्रुतभाव एवे'ति(४६६–२१), तस्य–सामायिकस्य अभिधायकत्वेन सम्बन्धी य' शब्द –करेमि भते ! सामायिकमित्यादिस्तेन विशिष्टो–युक्त श्रुतभाव एवेति गृह्यते, तत इदमुक्त भवति–भावश्रुतेऽन्तर्जल्पाकारे केवले बहि शब्दोच्चारणसहिते च श्रुतसामायिकस्यावतारो भवति । 'मनोवाग्योजनाया सत्यासत्यामृषाद्वये द्वयस्ये ति ( ४६६–२४ ), अत्र किल श्रुतसामायिके सम्यक्त्वसामायिकस्य चारित्रसामायिके तु देशविरतिसामायिकस्यान्तर्भाव चेतसि निश्चित्येत्थमाह–द्वये–सत्यासत्यामृषामनोवाग्योगलक्षणे द्वयस्यापि–श्रुतचारित्रसामायिकलक्षणस्यावतारो भावनीय इति, अन्यथा हि यद्यन्तर्भाव नाभिप्रेयात् तदा सामायिकचतुष्टयस्यापि तत्रावतार ब्रूयात्, न पुनर्क, मनोवाग्योगद्वयवतश्चत्वार्यपि सामायिकानि न सम्भवन्तीति । 'काययोजनायामपि द्वयस्याद्यस्य चे'ति ( ४६७–१) द्वयस्य–श्रुतचारित्रसामायिकलक्षणस्य काययोजनायामवतारो वेदितव्यो, ननु हस्तादिना भङ्गादिवर्त्तनात् तदवष्टम्भेन चान्तर्जल्पस्य बहि शब्दस्य च प्रवृत्तेर्भवतु श्रुतसामायिकस्य काययोगेऽवतार, चारित्र तु निश्चयत सावद्ययोगनिवृत्तिरूपो जीवपरिणामो यदाह—"आया खलु सामइय"मित्यादि तत्कथ तस्य काययोगेऽवतार इत्याशङ्क्याह—'आद्यस्य चे'ति एतदुक्त भवति–कायावष्टम्भेन यत्प्रवर्त्तते बाह्यप्रत्युपेक्षणादिक्रियारूप व्यावहारिकचारित्र तदपेक्षया द्वयस्यापि तत्रावतार उक्तो, नैश्चयिक त्वात्मपरिणामरूप चारित्रमपेक्ष्य यदि प्रेर्यते भवता तदाऽऽद्यस्यैव श्रुतसामायिकस्य काययोजनायामवतारो भावनीय इति । 'उच्छुवणे सालिवणे' इत्यादि

भवन्तीतिकृत्वा, तस्या एव शुक्लप्रतिपदो रात्रौ ववनामा करण भवति, इद चानवस्थितम्, एतस्यामन्यासु च तिथिषु भावाद्, एव शेषेष्वपि बालवादिष्वनवस्थितत्वमवसेय, एव शुक्लद्वितीयाया दिवा बालव रात्रौ कौलव तृतीयाया दिवा थीविलोचन रात्रौ गरमित्येवमेकैकस्या तिथौ क्रमेण करणद्वय २ पुनरावृत्त्यापि तावज्ज्ञेय यावत्कृष्णपक्षचतुर्दश्या दिवा विष्टिस्ततस्तन्निशाया आरभ्य पुनरप्यवस्थितानि तान्येव शकुन्यादीनि तावद्यावत् सितपक्षप्रतिपदि दिवा किंस्तुघ्नमित्यादि पुनस्तदेवावर्त्तेत । 'पक्खतिहीओ दुगुणिया'इत्याद्यानयनोपायोऽप्यवस्थितकरणभोग्यतिथिभ्योऽन्यतिथिषु द्रष्टव्य, तास्ववस्थितकरणानामेव सिद्धत्वादिति । 'सत्तमिचाउद्दसी य अट्ट विट्टि'त्ति ( ४६३-१० ), कृष्णनतम्या चतुर्दश्या चाह्नि विष्टिर्भवतीत्यर्थ । 'इदमेवमिती'ति ( ४६४-१४ ), इद-श्रुतमेव-बद्धाबद्धभेदभिन्न लौकिकलोकोत्तरभेद द्रष्टव्य, लौकिक बद्धानद्ध लोकोत्तर चेत्यर्थ । 'शास्त्रोपदेशव'दिति (४६४-१५), शास्त्ररूप उपदेश शास्त्रोपदेश -आचारादि तद्वदिति । 'भूतापरिणते'त्यादि ( ४६४-२१ ), भूतापरिणतविगतशब्दैर्यथासङ्ख्यमुत्पादध्रौव्यव्यया उच्यन्ते तेषा यच्च-
द्दकरण-भणन प्रतिपादनमित्यर्थ तत्प्रकाशोपदिश्यमानत्वादनिषीथमिति भावार्थ । 'सट्टीयरुज्झाय'त्ति (४६५-१२) सट्टीयरो-मातृष्वसृजातौ भ्रातरौ उपाध्यायौ-पूर्वावस्थायामध्यापकब्राह्मणौ तत कर्म्मधारय इति । 'बत्तीस अड्डीयाओ' इत्यादि ( ४६५-१८ ), अड्डिकाप्रत्यड्डिकाश्च धनुर्धराणा स्थानविशेषा लोकप्रतीता, तत्प्रतीता पाठविशेषा वा इत्यन्ये, करणानि-नर्त्तक्यादीनामालीढादीन्यपि धनुर्द्धरादीनामेव स्थानानि वैशिष्ट्याच्च कुतश्चित्पृथगुपात्तानि । 'भावश्रुतशब्द-करणेऽधिकारो भवति कर्त्तव्य'इति ( ४६६-२० ), भावश्रुत च शब्दश्च तद्रूपकरण भावश्रुतशब्दकरण, तत्र भाव

श्रुतमन्तर्जल्पाकार श्रुतोपयोगरूप, शब्दकरण तु नात्र करेमि भंते ! सामाइय सव सावज्ज जोगमित्यादिसामायिकशब्दोच्चारण निरुपयोगस्य सम्बन्धि गृह्यते, कि तर्हि गृह्यते ? इति चेदित्याह–'तच्छब्दविशिष्ट श्रुतभाव एवे'ति(४६६–२१), तस्य–सामायिकस्य अभिधायकत्वेन सम्बन्धी य शब्द –करेमि भंते ! सामायिकमित्यादिस्तेन विशिष्टो–युक्त श्रुतभाव एवति गृह्यते, तत इदमुक्त भवति–भावश्रुतेऽन्तर्जल्पाकारे केवले बहि शब्दोच्चारणसहिते च श्रुतसामायिकस्यावतारो भवति । 'मनोवाग्योजनाया सत्यासत्यामृषाद्वये द्वयस्ये ति ( ४६६–२४ ), अत्र किल श्रुतसामायिके सम्यक्त्वसामायिकस्य चारित्रसामायिके तु देशविरतिसामायिकस्यान्तर्भाव चेतसि निश्चित्येत्थमाह–द्वये–सत्यासत्यामृषामनोवाग्योगलक्षणे द्वयस्यापि–श्रुतचारित्रसामायिकलक्षणस्यावतारो भावनीय इति, अन्यथा हि यद्यन्तर्भाव नाभिप्रेयात् तदा सामायिकचतुष्टयस्यापि तत्रावतार ब्रूयात्, न ह्युक्तं, मनोवाग्योगद्वयवतश्चत्वार्यपि सामायिकानि न सम्भवन्तीति । 'काययोजनायामपि द्वयस्याद्यस्य चे'ति ( ४६७–१) द्वयस्य–श्रुतचारित्रसामायिकलक्षणस्य काययोजनायामवतारो वेदितव्यो, ननु हस्तादिना भङ्गादिवर्त्तनात् तदवष्टम्भेन चान्तर्जल्पस्य बहि शब्दस्य च प्रवृत्तेर्भवतु श्रुतसामायिकस्य काय योगेऽवतार, चारित्र तु निश्चयत सावद्ययोगनिवृत्तिरूपो जीवपरिणामो यदाह—"आया खलु सामइय"मित्यादि तत्कथ तस्य काययोगेऽवतार इत्याशङ्क्याह—'आद्यस्य चे'ति एतदुक्त भवति–कायावष्टम्भेन यत्प्रवर्त्तते बाह्यप्रत्युपेक्षणादिक्रियारूप व्यावहारिकचारित्र तदपेक्षया द्वयस्यापि तत्रावतार उक्तो, नैश्चयिक त्वात्मपरिणामरूप चारित्रमपेक्ष्य यदि प्रेर्यते भवता तदाऽऽद्यस्यैव श्रुतसामायिकस्य काययोजनायामवतारो भावनीय इति । 'उच्छुवणे सालिवणे'इत्यादि

( ४७०-२० ) गाथा-इक्षुक्षेत्रशालिक्षेत्रयो समीपे पद्मिनीपटलमण्डितस्य सरस समीपे कुसुमिते वा चम्पकवृक्षादिवनखण्डे गम्भीर -पर्वतनितम्बादिषु नानाजातीयानेकप्रशस्तवृक्षनिकराकीर्णो गह्वरप्रदेश उच्यते, सानुनादस्तु यत्र शब्दे समुच्चरिते दिक्षु प्रतिशब्द समुत्तिष्ठति गम्भीरश्च सानुनादश्चेति विगृह्यैकवद्भावाद्गम्भीरसानुनाद तस्मिन्नेवम्भूते प्रदेशे नद्यादिषु च यत्र दक्षिणावर्त्तेन जलमावर्त्तते तत्समीपे जिनगृहे वा सामायिक शिष्याय दीयत इत्यनन्तरवक्ष्यमाणगाथाक्रिया सर्वत्र सम्बध्यत इति गाथार्थ । 'सञ्झागय रविगय'मित्यादि ( ४७१-८ ) गाथाव्याख्या—सन्ध्यागत-यत्सन्ध्यायामुदेति यथा-कात्तिकमासप्रथमदिनसन्ध्याया कृत्तिका, मार्गशीर्षे वा मृगशिर इत्यादि, रविगत-यत्रादित्योऽनतिष्ठते, विड्डुर नाम कृतवक्रग्रहाधिष्ठित, सग्गह-क्रूरग्रहाध्यासित, विलम्बित-यदादित्येन भुक्त्वाऽनन्तरमेव त्यक्त, राहुहय ( गत ) यत्र रवेश्चन्द्रमसो वा ग्रहणमभूद्, ग्रहभिन्न-नाम यद्भित्त्वा भौमाद्यन्यतरो ग्रहो मध्येन विनिर्गत , एतानि सप्त नक्षत्राणि सामायिक प्रयच्छन् वर्ज्जयेदिति गाथार्थ । 'अभिवाहारो कालियसुयस्से ( सुअमी )'त्यादि ( ४७१-१२), गाथा—अत्राभिव्याहारो नाम शिष्याचार्ययोरुक्तिप्रत्युक्त्यादिना प्रकारेण सामायिकादिश्रुतस्योद्देशसमुद्देशादिविधिरुच्यते, स च सामायिके प्रकृतेऽपि प्रसङ्गत सर्वस्यापि श्रुतस्यानुयोगद्वारादिग्रन्थदृष्ट सामाचार्यायातश्च सामान्येनोच्यते, इह सामायिकाध्ययनादिश्रुतपठनेच्छया शिष्ये समुपस्थिते गुरु समवसरणस्थापना विधाय वामपक्षीकृतशिष्य पूर्वाभिमुख उत्तराभिमुखो वा देवान् वन्दते ततश्च शिष्य द्वादशावर्त्तवन्दन दापयित्वा तेन सहैव योगोत्क्षेपनार्थ पञ्चविंशत्युच्छ्वासमान कायोत्सर्ग करोति, पारितकायोत्सर्गश्चतुर्विंशतिस्तव पठति, ततश्च ऊर्द्ध्वस्थित एव वारत्रय पञ्चमङ्गलपाठपुरस्सर "नाण

पचनिह पनत्त''मित्यादिनन्दिमुच्चारयति,तदन्ते प्रणिपत्योत्थितो ब्रूते विनेय इच्छाकारेण अमुग सुय उद्दिसह, आचार्य इच्छा-
पूर्वकमाह–उद्दिसामि खमासमणाण हत्थेण सुत्तेण अत्थेण तदुभएण, पुन प्रणिपत्य शिष्य आह–संदिसह कि भणामो ?,
गुरुराह—'वदित्ता पवेयह' शिष्योऽपीच्छाम इति भणित्वा प्रणिपत्योत्थितो वक्ति–इच्छाकारेण तुब्भेहि अमुग सुयमुद्दिट्ठ
इच्छामि अणुसट्ठि' गुरुराह—जोग करेहत्ति, तत इच्छाम इत्युक्त्वा शिष्य प्रणिपत्यात्रान्तरे नमस्कारमुच्चारयन् गुरु
प्रदक्षिणयति, तदन्ते पुन प्राह–तुब्भेहि अमुग सुअमुद्दिट्ठ इच्छामि अणुसट्ठि, गुरुराह–जोग करेहत्ति, तत इच्छामी
त्युक्त्वा वन्दित्वा च नमस्कारपाठेन पुनर्गुरु प्रदक्षिणयति पुनस्तेनेव क्रमेण तृतीयप्रदक्षिणापि वाच्या, ततश्च प्रदक्षिणा-
त्रयान्ते गुरो पुरत शिष्योऽवतिष्ठते, गुरुश्चात्रान्तरे निषीदति, ततश्चार्द्धावनतगात्र शिष्यो भणति–तुब्भ पवेइय सदि-
सह साहूण पवेएमि, गुरुराह–पवेयहत्ति, शिष्यस्तु इच्छाम इत्युक्त्वा प्रणिपत्य चोत्थित पञ्चनमस्कार पठति, पुन प्रणिप-
त्योत्थितो वक्ति–तुब्भ पवेइय साहूण पवेइय सदिसह करेमि काउस्सग्ग, गुरुराह–एव करेहत्ति, तत प्रणिपत्योत्थितो
अमुगस्स उद्दिसावणिय करेमि काउस्सग्ग अन्नत्थ ऊससिएणमित्याद्युक्त्वा सप्तविंशत्युच्छ्वासमान कायोत्सर्ग करोति, तत
पारितकायोत्सर्गश्चतुर्विंशतिस्तव पठति, अत्र प्रदक्षिणावन्दनकत्रयेणाप्येकमेव गण्यते, तत सप्तभि क्षुल्लकवन्दनकैरङ्गा-
दिश्रुतोद्देशोऽवसितो भवति, उद्देशे च कृतेऽङ्गाद्यन्यतरश्रुतमिद भवतो वाचयामीति किल गुरुणा प्रोक्त भवति, समु-
द्देशेऽपि नन्द्याकर्षणादिरहित क्षुल्लकवन्दनकसप्तकादिस्वरूप स एव विधि, केवल प्रवेदिते गुरुराह—स्थिरपरिचिय करे-
हत्ति, समुद्देशे च कृते विवक्षितसूत्रस्य स्थिरपरिचितत्वकरणाय किल शिष्यो नियुक्तो भवति, अनुज्ञाया तु योगोत्क्षेपका-

योत्सर्गवर्ज्जो नन्द्याकर्पणादिक उद्देशविधिरेव वक्तव्यो, नवर प्रवेदिते गुरुराह–सम्म धारय अन्नेसिं च पवेयसुत्ति, एवमसौ कालिकश्रुतेऽभिव्याहार, उत्कालिकदृष्टिवादेऽपीत्थमेवाभिव्याहार, केवल शिष्येण अमुग सुय उद्दिसह इत्युक्ते गुरुस्तत्रेत्थमाह–इदमुद्दिस्सामीत्यादि । 'करणेयत्ती'त्यादि ( ४७२–१८ ), न केवल करणेयत्तीत्युपन्यस्तद्वारपरामर्श किन्तु भयेयत्तीत्ययमपीति योजना, अयमत्र भावार्था–यदिदमनन्तरोदित सामायिककरण तद्भावकरण, फ पुनर्भावकरण शास्त्रकारेण पूर्वमुद्दिष्ट येनेदमिह योज्यते इत्याह–"करणे य भए य"त्ति, इद हि प्रागुपन्यस्तद्वारगाथाद्यद्वारद्वय, अनेन च सकलापि सा गाथा सूचिता भवति, तद्यथा–'करणे भए य अन्ते सामाइअ सवए अ वज्जे य' इत्यादि अस्या गाथाया यद्भावकरणमुक्त शास्त्रकृता तदिदमनन्तरोदित सामायिकरणमित्यर्थ । 'भदि कल्याणे सुखे चे'त्यादि ( ४७२–२२ ), ननु भदन्त इत्यखण्डे शब्दे सति कुतोऽय प्रकृतिविभागो लभ्यते इत्याह–'जॄविशि'इत्यादि ( उ० ४१३ ), एतदुक्त भवति–जॄविशीतिधातुद्वयस्योणादौ तावदन्तप्रत्ययो दृश्यते, उणादयश्च बहुल भवन्तीत्यत्रापि झच्प्रत्ययो लभ्यते, तस्मिश्च सति सामर्थ्यात् भदिरूपैव प्रकृतिरभ्युह्यते । 'पश्चानुपूर्व्या ग्रन्थ'इति ( ४७३–९ ), होइ भयतो इत्यादौ किलैवमुपन्यासो भवति भदन्तो भवान्तो भयान्तश्चेति, अधिकारोपन्यासस्तु विपर्ययेण कृत इति पश्चानुपूर्वी कृता । 'आवस्सयपि निच्च' गाहा ( ४७३–१३ ), व्याख्या–अत्र किल कल्पग्रन्थनिबद्धेय सामाचारी–यदि लघ्वी वसतिर्भवति तदा केचित्साधव स्थानान्तरेऽपि परिवसन्ति, किन्तु गुरोरन्तिके समागत्य प्रतिक्रमण कृत्वा प्रादोषिककालग्रहणानन्तर काल सूत्रार्थपौरुषीद्वय च विधाय तत स्थानान्तरे गत्वा निद्रामोक्ष विदधति, अथ मार्गे श्वापदादिभय तदाऽर्धपौरुषी हाप-

यन्ति अथ तथापि मार्ग्गभयादि किञ्चित् तर्हि सूत्रपौरुषीमपि त्यजन्ति ततश्चरमकायोत्सर्गं द्वितीयमाद्य वा तावद् यावत्तिष्ठत्यपि सवितरि कारणतो वसत्यन्तर गत्वा गुरुस्थापनादिक्रमेणान्यत्रापि स्थिता प्रतिक्रमणादिषु यतन्ते यतोऽत्रापि भदन्त इत्यामन्त्रण कुर्वते इति दर्शित भवति, किं तद् इत्याह–आवश्यक प्रतिक्रमणादिलक्षण नित्यमेव गुरुचरणमूले कर्त्तव्यमिति, कस्यैतद्दर्शित भवतीत्याह–'वीसुपि हु सवसतो कारणतो'त्ति ( ४७३–१४ ), एकप्रतिश्रयनिवासिना तावद्गुर्वन्तिक एवावश्यक कार्यं योऽपि कारणतो वसन्तिसङ्कीर्णतादेर्विंश्वक्–पृथग् वसति तस्याप्यनन्तरदर्शितकल्पोक्तनीत्या गुरुचरणान्तिक एवावश्यक कर्त्तव्यतया दर्शित भवति, ननु य श्वापदभयात्कारणतो गुर्वन्तिकाद्रात्रौ गन्तु न शक्नोति स किं करोतीत्याह–'जयति सेज्जाए'त्ति, कारणत इतीहापि सम्बध्यते, ततश्च यद्यपि श्वापदभयादिकारणतो गुर्वन्तिक गन्तु न शक्नोति तथाप्यन्यस्यामपि शय्याया परिवसन् गुरुस्थापनादिक्रमेणैव यतते–यतना करोतीति गाथार्थ ॥ 'सम्पूर्णशब्दावयवमेवाधिकृत्याहे'त्यादि ( ४७४–१ ), इह 'साम सम चे'त्यादि खण्डीकृतशब्दापेक्षया सामायिकमित्यखण्ड –सम्पूर्ण शब्द उच्यते, 'करणे भए य अंते सामाइय सबए य वज्जे ये'त्यादिगाथैकदेशत्वादवयव , ततश्च सम्पूर्णशब्दश्चासावयवश्च सम्पूर्णशब्दावयवस्तमधिकृत्य साम सम सम्यक् इक इत्येते चत्वारोऽपि शब्दा एकार्था , एकार्थत्व चेह न पर्यायशब्दत्वममीषा मन्तव्य किन्त्वेकस्यैव सामायिकशब्दलक्षणस्यार्थस्य निष्पत्तये सामादयश्चत्वारोऽपि शब्दा व्याप्रियन्त इत्येकार्था उच्यन्त इति । 'ओघतो मधुरपरिणाम'मित्यादि ( ४७४–५ ), ओघत –सामान्येन तावन्मधुरपरिणाम–शर्करादिद्रव्य, विशेषतस्तु कस्यचित् स्वसात्म्यादिकारणात्कटुकमपि मधुरमिवाभातीति भाव । 'भूतार्थालोच-

नाया सम तुलाद्रव्य'मिति, भूत —सद्भूत तौल्ये कियत्प्रमाणोऽयमर्थ इत्यालोचनाया—तत्तौल्यप्रमाणजिज्ञासाया सत्या यथावस्थितप्रतिपादकत्वेन सम तुलाद्रव्यमेवेत्यर्थ । 'कण्ठतस्तावदुक्ते चालनाप्रत्यवस्थाने इत्यादि ( ४७६–१५ ), ननु च "को कारओ करितो" इत्यादौ परस्य कर्त्रादिस्वरूप प्रश्नयत सूरेरपि तत्कथयत उभयोरपि पुनरुक्तता, 'आया खलु सामइय'मित्यादिना तत्स्वरूपस्यानेकस्थानेषु पूर्वमेव निरूपितत्वाद् इत्याशङ्क्याह—'अत एव चात्र पुनरुक्ते'त्यादि, यत एव चालनाप्रत्यवस्थाने एते न स्वरूपकथन अत एव न पुनरुक्तता, कुत इत्याह—'अनुवादद्वारेणे'त्यादि, एतदुक्त भवति—यत्किमपि कर्त्रादिस्वरूप सूरिरभिधास्यते तदह निराकरिष्यामीति चालनाचिकीर्षया परस्य प्रश्नो यद्यसौ तत्स्व रूप मयोक्त निराकरिष्यति तदह स्थापयिष्यामीत्यभिप्रायवतश्च सूरेर्निर्वचन न तु मुख्यतया तत्स्वरूपप्रतिपत्त्यर्थमित्यदोष । 'विवक्षित घृत'मिति ( ४७७–६ ), प्रतिनियतैकभाजनादिस्थित न पुन समस्तजगद्गतमिति भाव । 'अत्र च ( तु ) क्षायोपशमिकभावसर्वेणाधिकार'इति ( ४७८–२ ), सर्वशब्दोऽन्तर्जल्पाकार किल श्रुतज्ञानरूप श्रुत च क्षायोपशमिके भावे वर्तते अतो युज्यते क्षायोपशमिकभावसर्वेणाधिकार इति । 'दानपुण्यफला कीर्त्ति'रिति ( ४८०–१६ ), दानपुण्याभ्या फलति २ कस्यचिद्दानसमुत्था अपरस्य तु तथाविध दानमप्रयच्छतोऽपि पूर्वभवोपात्तपुण्यवशात्कीर्त्ति प्रादुरस्तीति भाव । 'अन्यमपीत्यतिरिच्यत'इति ( ४८१–२ ), करतपि अन्य न समणुजाणामीत्यत्रापिशब्दोऽन्यशब्दश्चातिरिच्यत इत्यर्थ , तत्रापिशब्दस्य फलमाह—'यस्मात् सम्भावनेऽपिशब्दोऽय'मित्यादि(४८१–३)।

अन्यशब्दफलमाह–'न क्रियाक्रियावतो'रित्यादि ( ४८१–६ )। 'अतस्तद्भेदोपदर्शनाये'ति ( ४८१–१२ ), यत सावद्य योग त्रिविधेन प्रत्यारयात्यतस्तद्भेदोपदर्शनाय–सावद्ययोगप्रत्यारयानभेदोपदर्शनाय 'सीयाल भगमय'मित्यादिगाथा माहेत्यर्थ । 'तो कह निज्जुत्तीए'इत्यादि ( ४८१–२१ ) गाथाव्याख्या—यदि प्रज्ञप्त्या त्रिविध त्रिविधेन गृहिण प्रत्यारयानमुक्त तत कथ निर्युक्त्या वक्ष्यमाणप्रत्यारयानाध्ययनसम्बन्धिन्या "अणुमइनिसेहो"त्ति अनुमतिप्रत्याख्यानस्य निषेध क्रियमाणो घटते, तथाहि—तत्र 'दुविह तिविहेण पढमो इत्याद्येव वक्ष्यति, न पुन 'तिविह तिविहेणं पढमउ'त्ति एव परेणोक्ते सत्युत्तरमाह—( सो सविसयमित्ति ) स निर्युक्तावनुमतिप्रत्याख्याननिषेध स्वविषये मध्यमखण्डादिरूपे यत आयात वस्तु–वस्त्रहिरण्यश्रीखण्डादि परिभुङ्क्ते तद्विषयो द्रष्टव्यो, विषयबहिर्वर्त्तिस्वयम्भूरमणमत्स्यादिप्रत्याख्यानविषय तु प्रज्ञप्त्या त्रिविध त्रिविधेनेत्युक्तमित्यदोष, समाधानान्तरमाह—'सामन्ने वा नत्थी'त्यादि ( सामण्णेण नत्थि ) यो वा अमुकक्षेत्रवर्त्तिन इति विशेषमन्तरेण सामान्यतो द्वीन्द्रियादयो मया न हन्तव्या इत्येव प्रत्यारयाति तस्य नास्त्येव त्रिविध त्रिविधेन प्रत्यारयान, तद्विषय स निर्युक्तावनुमतिनिषेध, प्रज्ञप्त्या तु स्वयम्भूरमणाद्याधारविशेषितजन्तुप्रत्याख्यान-विषयाऽनुमतिप्रत्याख्यानाभ्यनुज्ञेति न दोष इति गाथार्थ । 'आह कह पुण मणसा' गाहा ( ४८२–१ ) व्याख्या–पर आह–ननु च वाक्कायाभ्या तावत्प्रत्यक्षादिप्रमाणत एव करणकारणानुमतयो दृश्यन्ते मनसस्तु ता नोपलभ्यन्ते तत्कथ तास्तत्र प्रत्येतव्या इत्याह—यथा वाग्योगतनुयोगाभ्या करणकारणानुमतय तथा मनसापि भवन्त्येव, कुत इत्याह–'तदधीणत्ता वइतणुकरणाईण'मित्यनन्तरगाथाया सम्बन्ध, एतदुक्त भवति–वाक्तन्वो सम्बन्धीनि यानि करणानि-

करणकारणानुमतय इत्यर्थ तानि मनोऽधीनान्येव भवन्ति, नहि मनोविकल्पमन्तरेण प्रायस्तनुवचनाभ्या करणादीनि प्रवर्त्तन्ते अतो मनस्यपि तनुवचनकरणाद्युपचार क्रियत इति भाव, यदिवा किमत्रोपचारेण ?, यदा हि निर्व्यापारतनुवचनोऽपि सावद्ययोगकरणादि मनसा विकल्पयति तदा मुख्यतयाऽपि तनुवचनवन्मनस्यपि करणादीनि सम्भवन्त्येवेति, आह च—'अह मणकरण सावज्जजोगमणण'मित्यादि भावितमेवेति । 'अर्थविकल्पसङ्ग्रहार्थं न पुनरुक्त मिति ( ४८४-११ ), अर्थो-मन प्रभृतिकरणलक्षण तस्य विकल्पा-भेदा तत्सङ्ग्रहार्थं त्रिविधेनेत्युच्यमान न पुनरुक्त, एतदुक्त भवति-य एव मनसा वाचा कायेनेत्यनन्तर सविस्तर वक्ष्यमाणोऽर्थ स एव त्रिविधेनेत्यनेन सङ्क्षेपतोऽत्र सङ्ग्रहपदत्वाद्पुनरुक्तमिदमिति । 'अथवा अत्राणमतीतसावद्ययोग'मित्यादि ( ४८६-१९ ), न त्राण अत्राण-ससारभयात्त्रातुमसमर्थं सावद्य योग जुगुप्से इत्यर्थ, कस्मादित्याह—अधुना सामायिकेन त्राण मम भविष्यतीति हेतो, लब्धे हि साम्प्रत त्राणरूपे सामायिके तमत्राणस्वरूप सावद्य योग व्युत्सृजामीतिभाव । 'नन्वेव सावद्ययोगपरित्यागा दित्यादि ( ४८६-२२ ) अत्र किल परोऽतीवासम्बद्धप्रलापितया विवक्षितनिर्दोषसम्बन्धेन सम्बन्धितमपि व्युत्सृजामिशब्दमनिष्टसम्बन्धेन सम्बन्धयन्निदमाह—ननु चैवमुक्तन्यायेन 'करेमि भते ! सामाइय'मित्यादिसूत्रस्याय तात्पर्यार्थो गम्यते, यदुत-सावद्ययोगपरित्यागेन करोमि भदन्त ! सामायिकमिति, एव सति सावद्ययोगनिवृत्तिरत्र प्रतीयते, पर्यन्ते च 'तस्स भते ! पडिक्कमामी'त्यादो तस्य व्युत्सृजामीतिशब्दप्रयोगे सतीदमनिष्टमापद्यते तस्य-अनन्तरसामर्थ्यलब्धसावद्ययोगनिवर्त्तनस्य व्युत्सृजामि-सावद्ययोगस्य निवृत्तिमुत्सृज्य प्रवृत्ति विदधामीत्यर्थ, अत्रोत्तरमाह—'तन्ने'त्यादि ( ४८६-२४ ),

यदि ह्येवमुल्लण्ठतया सम्बन्ध क्रियते तर्हि यदा कश्चित् 'मस पच्चक्खामि अन्नत्थणाभोगेण'मित्यादिना मासविरतिमभिधाय पर्यन्ते व्युत्सृजामीति ब्रवीति तदाऽन्नाप्यनन्तरोक्ता मासविरति व्युत्सृजामीत्यनिष्टसम्बन्ध स्याद्, अथात्र मास विरतिविपक्ष एव त्याज्यत्वेन मनसि विवक्षितो मनोगत एव च भाव प्रत्याख्यान भवतीति नानिष्ट सम्बन्ध क्रियते, यद्येव सर्व सुस्थमिहापि सावद्ययोगनिवृत्तिविपक्षस्य हेयत्वेनाभिप्रेतत्वादिति । 'त्रिविध त्रिविधेन व्युत्सृजति पापमेव्य'मित्यादि ( ४८८–११ ), विशेपत एव्यमिति ब्रुवाणस्य कोऽभिप्राय ?, उच्यते, सावद्ययोगविरत इत्यनेनैव गतार्थे त्रिविध त्रिविधेन व्युत्सृजति पापमिति यद्द्वितीयपदोपादान तेनैव किल ज्ञापयति यत्र सावद्ययोगे प्रवृत्तिरासीत् ततो निवृत्त इति प्रतिपादित 'सावज्जजोगविरओ'इत्यनेन पदेन यदेष्य पाप ततोऽनिवृत्त एव किल एप प्रतीयते अतस्तन्निवृत्तिप्रतिपादक द्वितीयपदमिति विशेपत उक्त वृत्तिकृता त्रिविध त्रिविधेन व्युत्सृजति पापमेष्यमिति, कदा पुनरयमेवविध कर्त्ता भवतीत्याह—'सामायिकादौ' ( ४८८–१२ ), सामायिकारम्भसमय इत्येव सम्बन्धो, यदा तु सामायिकादौ सूत्र इत्यनेन द्वितीयव्याख्यानेन 'करेमि भते ! सामाइय'मित्यादिसूत्र गृह्यते तदेत्थ सम्बन्ध , एपोऽनुगम परिसमाप्त', क्व विपये योऽसावनुगम इत्याह—'सामायिकादौ सूत्रे'करेमि भंते ! सामाइयमित्यादिसूत्रविषय इत्यर्थ । सामायिकाध्ययन समाप्तमिति ॥

अधुना चतुर्विंशतिस्तव आरभ्यते

'चतुर्विंशतिस्तवस्य निक्षेपो भवति नामनिष्पन्न'इति ( ४९१–१५ ), ननु किं तन्नाम यस्य निक्षेप करिष्यत

इत्याह—'अन्यस्याश्रुतत्वादि'ति, ननु यदि नामेवात्र पृष्टव्य तत्किमिति को इत्यनेन पुरुषनिर्देश कृतो वृत्तिकृता ?, सत्य, किन्तु को नामनिष्पन्नो निक्षेप इति निक्षेपापेक्षयेत्थ निर्देशो वस्तुत पुनर्नामैवात्र पृष्टव्यमित्यदोष । 'परमाणवस्त्वप्रदेशा एवे'ति ( ४९४–२३ ), ननु यदि सामान्यविशेषरूपतया प्रदेशत्वमप्रदेशत्व च गीयते तर्हि परमाणोरप्युभयरूपता कि न स्याद् येनोच्यते परमाणवस्त्वप्रदेशा इति, न हि जैनाना किञ्चिद्वस्तु सामान्यविशेषरूपतामतिक्रामति, सत्य, विद्यते परमाणुषु तिर्यक्सामान्य न पुन स्वावयवव्यापितत्वलक्षणमूर्ध्वसामान्य, निरवयवत्वादेव तेषामित्यदोष ॥ 'उदइयखओवसमिय' गाहा 'उवसमसेढी एक्को' गाहा ( ४९५–२६ ), नारकाणामौदयिको भावो—नरकगत्यादि, क्षायोपशमिकस्त्विन्द्रियसम्पन्नतादि पारिणामिकस्तु जीवत्वादिरित्येव भावत्रयनिष्पन्नो नरकगतावेको भङ्ग, एव तिर्यग्नरामरगतिष्वप्येकैको वाच्य, ततो गतिचतुष्टयेऽपि चत्वारो भङ्गा भवन्ति, तथाऽभिहितस्वरूपे भावत्रये क्षायिकभावप्रक्षेपे भावचतुष्टयनिष्पन्न एको भङ्गो भवति, गतिचतुष्टयसम्बन्धात् चत्वारो भङ्गा सम्पद्यन्ते, क्षायिकभावसम्पन्ना हि क्षायिकसम्यग्दृष्टय सर्वास्वपि गतिषु लभ्यन्ते, अथ क्षायिकमपहाय तत्स्थाने औपशमिक प्रक्षिप्यते, तद्योगेनापि गतिचतुष्टये चत्वारो भङ्गा भवन्ति, प्रथममेव सम्यक्त्वमासादयता हि गतिचतुष्टये प्राप्यते औपशमिको भाव, एव सर्वेऽपि द्वादश, तथा दर्शनसप्तक क्षपयित्वा य उपशमश्रेणीं विधत्ते तस्यौदयिकौपशमिकक्षायिकक्षायोपशमिकपारणामिकभावपञ्चकनिष्पन्न एको भङ्गो लभ्यते, केवलिनोऽप्यौदयिकक्षायिकपारिणामिकभावत्रयनिष्पन्न एक एव क्षायोपशमिकस्त्वस्य नास्ति 'अतीन्द्रिया केवलिन' इतिवचनात्, सिद्धस्यापि क्षायिकपारिणामिकभावद्वयनिष्पन्न एक एव, एते सर्वेऽपि त्रय पूर्वोक्ता

